**प्रतिषिद्धमपरया द्वारा निष्क्रमणं मलवद्वाससा सह सँ᳭वस्त्रणँ᳭ रजः सुवासिन्या सह शय्या गुरोर्दुरुक्तवचनमस्थाने शयनँ᳭ स्मयनँ᳭ सरणँ[1] स्थानँ[2] यानं गानं तस्य चेक्षणम् ॥ १९ ॥ पौर्णमास्याममावास्यायाँ᳭ वाग्नेयेन पशुना यजेत ॥ २० ॥**

इदानीं स्नातकनियमानाह–' प्रतिषिद्धमपरया द्वारा निष्क्रमणम् ' भित्तिकाद्वारेण निःसरणान्तर्वाटोपवाटेन निष्क्रमणनिषेधः । ' मलवद्वाससा सह संवस्त्रणम् ' मलिनवाससा जन्तुना सह निर्मलमपि न संवस्त्रं ( स्त्रणं ) न संवस्त्रयेत् । संवस्त्रणमाच्छादनम् । ' रजः सुवासिन्या सह शय्या ' न शोणितदिग्धवस्त्रिण्या सह शयनम् । अरजः स्ववर्णमय्याऽपि । इतरया संभाषणस्यापि निषेधात् । 'गुरोर्दुरुक्तवचनम् ' गुरुरत्र मात्रादिर्विद्यागुरुश्च विशेषाद् गुरूक्तवचनमवाच्यभाषणम्[3] । 'अस्थाने शयनम्' । स्मयनं निष्प्रयोजनं हसनं गर्वो वा स्मयनम् । सरणमकारणं वृथाऽटनम् । स्मरणमिति केचित्पठन्ति तदा अस्थाने वेदार्थस्मरणम् । स्थानं निष्प्रयोजनं स्थितिमिच्छा ( स्थितीच्छा ) जिज्ञासाकुलैर्वा परं रथ्यारोहणमनवसरे । अथवा म्लेच्छादिस्थानगमनम् ॥ गानमध्ययनविज्ञानाभ्यासस्य प्रतिकूलत्वात् । शुष्कवादो वा गानम् । कै गै[4] शब्द इति साहचर्यान्नृत्याद्युपलक्षणं गानम् । [5]तेन " नेहेतार्थान्प्रसङ्गेन " इत्यादि स्नातकव्रत कलापो गृहीतस्तथा चानुवदिष्यति ' यद्यचरणीयान्वाचरेद् ' ( १-३-४ ) इत्यादावशनादीनि च स्नातकाङ्गतयोक्तानि[6] । तस्य चेक्षणं परेणापि क्रियमाणे गमनादाववेक्षणादि प्रतिषिद्धम् । चकारोऽनुक्तसमुच्चयार्थस्तेन[7] नेहेतार्थानित्यादि परिग्रहः[8] । १९ ॥

' पौर्णमास्याममावास्यायां वाऽऽग्नेयेन पशुना यजेत ' स्नान समनन्तरं पशुयागोऽयं क्रमात् । ब्रह्मचर्यादौ पाकयज्ञपशूक्तेन विधानात् ( २-५-६ ) ॥ २० ॥

---

१ स्मरणं, क. ख. । २ स्थानं पानं, क. ख. । ३ वाद्य, क. ख. । ४ कै गै रै, ग. । ५-६-० घ. । ७-८ ० घ.

**तस्य हविर्भक्षयित्वा यथासुखमत ऊर्ध्वं मधुमाꣳसे प्राश्नीयात्क्षारलवणे च ॥ २१ ॥ इति द्वितीयः खण्डः ॥**

'तस्य हविः क्षारलवणे चेत्यन्तं' सूत्रम् । किमयं भक्षणविधिः क्षत्रियविडर्थं ब्राह्मणे[1] एव हविःशेषमित्यप्राप्तेरुत यजमानभागानुवादः ? । क्षत्रियविडर्थं युक्तं तस्य हवि-र्भक्षयित्वा यथासुखमत ऊर्ध्वं मधुमांस-भक्षणेऽधिकारात् अनुवादपक्षेऽपि क्षत्रियवैश्ययोरस्ति मध्वादि लक्षणेऽधि-कारानुवादत्वे तस्य हविर्भक्षयित्वा तेनेष्ट्वा मध्वादि प्राश्नीयादित्यर्थः । अनि-ष्ट्वानेन पशुना मांसादि भक्षणेऽनधिकारात् । भक्षयेत् प्रायश्चित्ती स्यात् । श्राद्धादिनियुक्तोऽपि मध्वादेः प्रसवं प्रति यथासुखं [2]स्यादित्येवंरूपमपि प्रतिप्रसुवस्वदानेन त्वथ भृतवदनादिति[3] (?) ॥ २१ ॥

॥ [4]इति पूरण[5]व्याख्याने द्वितीयः खण्डः[6] ॥

---

१ ब्रह्मणः, ग. । २–३–० घ. । ४–६–० घ. । ५ पूरणाख्या, ख. ग. ।

## तृतीयः खण्डः ।

यमेवꣳ विद्वाꣳस मभ्युदियाद्वाभ्यस्त मियाद्वा प्रतिबुध्य जपेत्

पुनर्मा मैत्विन्द्रियं पुनरायुः पुनर्भगः
पुनर्द्रविणं मैतु मां पुनर्ब्राह्मणं मैतु माम्
अथोयथेमे धिष्ण्यासो अग्नयो यथास्थानं
कल्पयन्ता मिहै-वेत्यभ्युदितः ॥ १ ॥

पुनर्मात्मा पुनरायुरैतु पुनः प्राणः पुनराकूतिरैतु
वैश्वानरो वावृधानो वरेणान्तस्तिष्ठतो मे मनो अमृतस्य केतुः
इत्यभ्यस्त मितः ॥ २ ॥ उभावेव वाभ्युदितो जपेदुभावेव वाभ्यस्तमितः ॥ ३ ॥

स्नातकव्रतातिक्रमे प्रायश्चित्तप्रकरणमधुनेष्यते यमेवं विद्वांस मित्यादि ब्रह्मचारिणोप्येतत्प्रायश्चित्तान्तरानाम्नानात् यमेवं विद्वासं प्रतिबुध्य जपेद् यमेवं विद्वांसमित्यनुवादः प्रकृतत्वाच्छन्दोर्थात् [2]सुप्त्वेति व्यवच्छेदार्थं वा एवं शब्दात् । [3]एतेन धर्मेण साध्वधीत इति नाऽनुग्रहणश्च । तस्मात्रिविधः स्नातकः साधुरसाधुर्मध्यमश्च । अव्रताध्यायी असाधुः । द्वादशवर्षाद्यध्यायी द्वादशवर्षादिव्रतचारी साधुः । असमाप्तव्रतविद्यो मध्यमः । तत्र मध्यमसाधुपरिसंख्यानार्थं यमेवं विद्वांसमिति तयोः स्मार्तश्रौतप्रायश्चित्तं द्रष्टव्यम् । यद्यपि रहस्य–प्रायश्चित्तमेतद्विदुषोऽधिकाराद्गम्यते ततश्चैवमिति प्रतिबुध्य जपेत् बुद्धश्छन्दार्थतत्वमाचार्यात् अभ्युदियात्सूर्य इति स्मृत्यन्तरात् । शयानमपि गम्यते प्रतिबुध्य पदात् । यद्वा लोकयात्रा राजवार्ता परिहासादिसक्तं सन्ध्योपासनार्थमनिष्क्रान्त मति-

---

१ मे आत्मा, क. घ. । २ सुप्ता, ख. । ३—४—० घ । ५—६—० ग. च. । ७—८ ० घ. ।

यद्यचरणीयान्वाचरेदनाक्रोश्यान्वाक्रोशेदभोज्यस्यवान्नं म-श्नीयादक्षि वास्पन्देत्कर्णौ वाक्रोशेदग्निं वा चितिमारोहेत्स्मशा-

क्रान्तसंध्योपायं सूर्योऽस्तमयोदयाख्यौ व्याप्नुयात् । स विद्वान्प्रतिबुध्य । एतद्व्यतिक्रमात्ततः स्वरादिशुचिर्जपेत् । किं तदाह पुनर्मामैत्वित्यादि । उभावेवावधारणे पूर्वकल्पनार्थप्रसङ्गात् । विकल्पस्य तु सूत्रद्वयात्तद्भावे सिद्धे एवकारो वाक्यपूरणार्थः ॥ १ ॥ २ ॥ ३ ॥

'यद्यचरणीयान्वाचरेत्' अपरद्वारानिष्क्रमणादीन्यकर्तव्यान्याचरति चोद्यत्सूर्यदर्शनादीनि । 'अनाक्रोश्यान्वाक्रोशेत्' आक्रोश्यानर्हान्यद्याक्रोशेत् । आक्रोशनं तर्जनं परुषवचनानि परिवादनिन्दादि तत्तुल्यादित्वात् अनाक्रोश्यानिति व्यवच्छेदो भार्यापुत्राद्यर्थः । आक्रोश्यप्रकृत्याक्रोशनार्थो वा तस्माच्छिन्नार्थमाक्रोशः प्रायश्चित्तं प्रत्याक्रोश्येव क्रोशनके (?) । 'अभोज्यस्य वान्नमश्नीयात्' अन्नान्तस्याऽभोज्यस्य अभोज्यान्नस्य वार्धुषिकादेः स्मृतौ–" सप्तरात्रं यवान्पिबेत् " ( मनु० ११-१५३ ) इत्यादि तस्य गुरुत्वादस्मिन्विषये लब्धे तदुक्तमिति चेत् । यमेवं विद्वांसमित्यधिकारविशेषः । उक्तं च—

" तथा ज्ञानाग्निना पापं कृत्स्नं दहति वेदवित् "

इति वेदविदपि विप्रोस्येत्यर्थवादाद्विदुष एतत् रहस्याधिकारो वाऽयम् । 'अक्षि वा स्पन्देत्' स्फुरेदित्यर्थः अक्षिकर्णस्पन्दनशब्दोत्र ( व ? च ? ) कर्मणि पक्ष्मणि तत्र विनापि समीपेक्षा अनिष्टसूचकत्वात्तदुपशमार्थं प्रायश्चित्तम् । तत्र एव वा समीक्ष्येच्छन्ति 'कर्णौ वा क्रोशेत्' शब्दायेतेत्यर्थः । अक्षिकर्णयोः स्पन्दनं क्रोशनक्रियायां कर्तृत्वमौपचारिकम् 'रेतसोवा स्कन्देत्' रेतसः षष्ठी निर्देशान्निद्रायां स्कन्दने प्रायश्चित्तम् । केचित्प्रथमान्तं पठन्ति । तत्राप्यविशेषान्नैमित्तिकम् । 'यूपं वोपस्पृशेत्' ऊर्ध्वं चरुहोमादित्युक्तम् । 'श्मशानं वा गच्छेत्' मृतमनुगच्छेदित्यर्थः । यदि वा शवदाहकाले 'अग्निं वा चित्यमारोहेत्' परिगीत-

१ र्णौ, ख. । २ त्य, क. घ. । ३ दिना, ग. घ. च. । ४-५-० घ. । ६-७-० घ. । ८-९-क. । १०-११ ० घ. । १३ स्व, क. ग. च. । १२-१४ ० घ. ।

**नꣳ वा गच्छेद्यूपꣳ वोपस्पृशेद्रेतसो वा स्कन्देदेताभ्यामेव मन्त्राभ्यामाहुतीर्जुहुयादपि वाज्यलिप्ते समिधा वादध्यादपि वा मन्त्रावेव जपेत् ॥ ४ ॥ एवमधर्ममाचर्यास्थूलम् ॥ ५ ॥ स्थूले वेषणया विहरेदवस्त्रो लोमत्वगाच्छादोऽग्निमारोहेत्संग्रामे वा**

मिति केचित् तदयुक्तं क्रत्वर्थोऽसौ तिष्ठेत्ततस्तदतिक्रमेऽनाम्नातप्रायश्चित्तं क्रत्वर्थम् । इदं पुरुषार्थ (र्थं) निषेधस्य पुरुषार्थत्वात् । एवं यूपस्पर्शेऽपि । इतरथा प्रायश्चित्तद्वयं क्रत्वर्थं पुरुषार्थं च स्यात् । नाग्निभ्यो व्यावर्त्तेतेत्यादौ निषेधातिक्रमे क्रत्वर्थमेव प्रायश्चित्तम् । न पुनरिदं प्रतिपुरुषार्थम् अस्य हि यद्यचरणीयान् वाचरेदित्यनेन सिद्धे यं यूपं वोपस्पृशेत् एवं सत्य नर्थकं स्यात्तस्मात्सामान्येनायं निषेधः । प्रतिवाक्यं वा शब्दाद्विकल्पार्थात्तेन समुच्चितानां स्मृत्यन्तरविहितं प्रायश्चित्तं ज्ञेयम् । 'एताभ्याम् जुहुयात्' एवकारो वाक्यपरिपूरणार्थः । आहुत्यन्तराभावात् तदभावो जपति शब्दात् । आहुतीत्यनुवादो मन्त्रद्वयेनाहुतिद्वयस्य सिद्धत्वात् । तथासारो (?) जुहोतीति । अन्यस्तु एवकारो मन्त्रान्तरनिवृत्तिद्वारेण प्रकृतमन्त्रप्रशंसार्थः । अपि वाज्यलिप्ते समिधा वादध्यात् । आज्यग्रहणं संस्कारार्थं घृतलक्षणार्थं वा अपि वा मन्त्रावेव जपेत् । एवकारो जपस्तुत्यर्थो नत्ववधारणार्थः पूर्वसूत्रद्वयानर्थक्यप्रसङ्गात् ॥ ४ ॥

'एवमधर्ममाचर्यास्थूलं' एवं प्रकारमधर्ममाचर्येति केचिदस्थूलग्रहणमनर्थकं प्रकरणवचनेनैव साधितत्वादस्थूलमुपपातकादि अधर्ममाचर्य एताभ्यामित्यादि कुर्यात् । एतच्चैनासि गुरूणि गुरूणीत्यनेन न्यायेन मासं पक्षे वा पापानुरूपेण षण्मासादिकालं वा ब्रह्मचर्यादिनियमस्तु यथोक्तमपि—भ्रूणहनं मासात्पुनन्त्यहरहः कृता इति ॥ ५ ॥

'स्थूले वेषणया विहरेत्' स्थूले महापातके स्वेन आचरते वेषणया तत्पापचिह्नं चरेत् तदुक्तम् "कृत्वा शवशिरोध्वज" मिति विहरेत्पृथिवीम्

---

१ चो, ग. च. । २-४-० घ. । ३ वोयं, ख. । ५-६-० घ. । ८ कुर्यात, क. ख. ।

घातयेदपि वाऽग्निमिन्धानं तपसाऽऽत्मानमुपयोजयीत ॥ ६ ॥

इति तृतीयः खण्डः

आक्रमेत् । अन्ये वेषणां छुरिकामाहुः । विहरणं विशसनं च । अवस्त्रो [1]लोमत्वगाच्छादो–वस्त्रविरहितः लोमसहिता त्वक् चर्म सा त्वाच्छादो यस्य स लोमत्वगाच्छादः । तदुक्तं चर्मणा येन [2]संवृतः । एवं च सूत्रशेषो य एवं विहरेत् । अन्ये न पुनरेव अस्य लोमत्वगाच्छादो नग्न इत्यर्थः । एवमग्नि मारोहेदित्याहुः । अन्यस्तु अवस्त्र इति वासःप्रतिषेधा-दुत्तरीयनि[3]षेधः । लोमत्वगाच्छाद इति लोममयं कुरुते एवं त्वङ्मय आच्छादो यस्य स तथोक्तस्तेन कोर्थः । अथ वा कायादुत्तरीयं कुतुपं चर्मणा भवति । ततो यत्र गोचर्म विहितं चर्मणा तेन संवृत इति तत्र चैवं भवति अन्यत्र कामचारः । अग्निमारोहेत्प्रास्येदात्मानमग्नौ भवति संग्रामे वा घात-येदात्मानमिति शेषः । उक्तं च–' लक्ष्यं शस्त्रभृतां वा स्यात् ' इति । [4]अन्यत्र प्रवृत्ते संग्रामे प्रविश्य युध्यादिति । ' अपि वाग्निमिन्धानं तप-सात्मानमुपयोजयीत ' अपि वेति पूर्वस्माद्विलक्षण्यार्थो निपातसमुदायः । पूर्वं हि मरणान्तिकमिदं तु जीवतः शुद्ध्यर्थम् । तपसेति प्रयोगात्तप[5]श्च प्राणायामादि पञ्चतपादि (?) वोच्यते । अग्निमिन्धानं समिद्धिः सायं प्रात रन्यत्र वा तीर्थादौ तपोयुक्तमात्मानं वा कुर्यादित्यर्थः महापातकोपपातकयोः शास्त्रान्तरादवगम्यानि प्रायश्चित्तानि वा एकत्र कार्यानुबन्धनापेक्षया द्रष्ट-व्यानि । इह दिङ्मात्रसूचना । अन्ये त्वन्यथेदं सूत्रं वर्णयन्ति । यदि पूर्वं मरणान्तिकमिदं जीवन्नेव तपोयुक्तमात्मानं कुर्यात् । यत आत्मघातकस्य प्रत्यवायो दृष्टस्तस्मात्तप एव कुर्यात्प्रायश्चित्तार्थं न पुनरग्निप्रवेशादिभि रात्मानं घातयेत् । अतएव अपि वेति निपातसमुदाय एव एवं कुर्यान्नान्य इत्यर्थः ॥ ६ ॥

इति पूरणव्याख्याने तृतीयः खण्डः ॥ ३ ॥



१ वस्त्रविरहित इति, अधिकम ख. । २ संयुतः, च. ग. । ३ निवृत्तिः, च. ग. । ४ स्तु, च. ग. । ५ इदं छान्दसं रूपम्. । ६ श्वरेत्. ।

# चतुर्थः खण्डः

## वर्षासु श्रवणेन स्वाध्यायानुपाकुरुते ॥ १ ॥

'वर्षासु श्रवणेन स्वाध्यायानुपाकुरुते' चतुष्पदं सूत्रं वर्षाग्रहणं भाद्रपदे श्रवणेन[1] यथा स्यादित्येवमर्थं कृतं तेन प्रथमातिक्रमे[2] कारणाभावाच्छ्रावण्यामेव युक्तमिति। तत्र किं[3] श्रावण्यां ग्रहणं स्यान्नवर्षास्विति। अन्यस्तु प्रथमे श्रवणेऽनध्यायनिमित्तं विद्युदादि भवति स्तनिताद्यदि न कृतं तदा द्वितीयेऽपि कुर्यादित्येवं ननु वर्षाग्रहणमुभयार्थं वा अनन्यापेक्षं वा तेन यदि प्रथमे श्रवणेऽनध्यायनिमित्तं विद्युदादि भवति तदा नैव कुर्यात्। श्रवणेनेति तृतीयाऽधिकरणे 'नक्षत्रे च लुपीति' (पाणिनिः २,३,४५)। अनध्यायशब्दोऽध्यायन्यायोद्यावेत्यत्र (पा० ३,३,१२२) निपातितः। स्वश्चासावध्यायश्च स्वाध्यायः शोभनोवाध्यायः स्वाध्यायः। संज्ञाछन्दसोर्बहुलमिति दीर्घत्वं बहुलग्रहणात्। उपाकरणं प्रारम्भः। तेन वर्षाकाले श्रवणे नक्षत्रे आत्मीयां शाखामध्यायार्थमुपाकुर्यादित्यर्थः। प्रकरणात्स्नातकोऽध्यापयिष्यन्निति गम्यते। अन्तेवासिभिर्योगमिच्छन्निति लिङ्गाच्च। प्रथमाध्यापने वैतदन्वारम्भणीयेष्टिवन् न जपेत्। अभ्यासार्थं वा प्रतिप्रसङ्गात्। उपाकृतेऽध्ययैने ब्रह्मयज्ञे चेति कोदोष इत्यपरे। अन्यस्तु ब्रह्मयज्ञेन युक्तं विशिष्टनक्षत्रकालश्रवणादत एव न कार्यम्। किंतु संवत्सरे संवत्सरे कर्त्तव्यम् ज्योतिष्टोमवत्। स्वाध्यायानिति पूजार्थं बहुवचनं वेदाभिप्रायं वा प्रपाठकाभिप्रायं वा। अथवा शिष्याः कोशेति मन्त्रलिङ्गात्। स्मृत्यन्तरे चोपाकृत्याधीयीत छन्दांसीति कन्त्रैक्याच्च। एवं चेदन्तेवासिशब्दः सहाध्यायिनो लक्षयिष्यति। समानाध्यायः स्वाध्यायः स्वाध्यायेहितैः सहयोग इष्यते तस्मादन्तेवासिनः सहाध्यायिनोऽपि शक्यन्तेऽवगन्तुम्। दृष्टार्थत्व-

१ श्रावणे वा, ग. च.। २ म, ख. क.। ३ किंच, ग. च.। ४–५ ० घ.। ६–७ ० घ.। ८ ध्ययनार्थं, क. ख.। ९ कम, क. ख.। १० प्रथमां तेनैवैतद्, ग. च.। ध्ययने वै। तदात्वारम्भणीयेष्टिवत्ता, घ.। ११ विप्रसङ्गा, ग. च.। १२ उपनुरू (?), ग. च.। १३ न्यार्थे, ग. च.। १४–१५ ० घ.। १६ न उ पल, क. ख.।

स जुहोति—

अप्वानामासि तस्यास्तेजोष्ट्रीं गमेयम् ।

अहमिद्धि पितुः परिमेधामृतस्य जग्रभ अहं सूर्य इवाजनि स्वाहा ।

अप्वोनामासि तस्य तेजोष्ट्रं गमेयम् ।

अहमिद्धि पितुः परिमेधामृतस्यजग्रभ अहं सूर्य इवाजनि स्वाहा ।

सरस्वतीनामासि सरस्वन्नामासि । युक्तिर्नामासि योगो नामासि । मतिर्नामासि मनो नामासि ॥ तस्यास्तेजोष्ट्रीं गमेयम् । तस्य तेजोष्ट्रं गमेयमिति सर्वत्रानुषजति ॥ २ ॥ युजे स्वाहा प्रयुजे स्वाहोद्युजेस्वाहेत्येतैरन्तेवासिनां योगमिच्छन्निति ॥ ३ ॥ प्राक् स्विष्टकृतोथ जपति । ऋतं वदिष्यामि सत्यं वदि

मपि सहाध्याययोगेऽस्ति परस्परसहाध्यायित्वादि तद्योगत्वादि वा । मन्त्रलिङ्गात्तु कर्त्रैक्ये तन्मामवतु तद्वक्तारमवत्विति । मा मिति ब्रह्मचारिणं ब्रूते वक्तारमित्युपाध्याय(यं) प्रसिद्धेः ॥ १ ॥

स जुहोति । य उपाकुरुते स जुहोति नाध्वर्युः । तत्र कर्म प्रदर्श्यते यद्युपाध्याय उपाकर्म जुहोति संप्राप्तिं चाह । शालाग्निकरणात्प्राग् जन्माग्नौ निर्मथ्य वा जन्माग्न्यभावे स्यात् । अन्यस्तु जन्माग्नावेव तस्य नित्यत्वात्तदेव निर्मथ्य उच्यते अरणिभ्यां मन्थनविधानाज्जातकर्मादौ[१] । अप्वानामासि तस्यास्तेजोष्ट्रीमिति । अप्वोनामासि तस्य तेजोष्ट्रमिति । इयं व्यवस्था[२] । एभिर्मन्त्रैर्जुहोत्याज्यमनादेशात् स्विष्टकृद्दर्शनादाज्यभागादि तन्त्रं लभ्यतेयथालिङ्गमनुषङ्गः । यद्यस्य लिङ्गं तत्तस्यानुषजति सरस्वतीति स्त्रीलिङ्गात्तस्यास्त इति अनुषजति सरस्वानिति पुल्लिङ्गात्तस्य त इति एवमुत्तरत्र ॥२॥३॥

'प्राक् स्विष्टकृतोऽथ जपति' प्राक् स्विष्टकृतो जपतीत्येतावत्युक्ते[३] सिद्धः प्राक् स्विष्टकृतो जपस्ततः किमथशब्देन तत्रैके एतेनान्तेवासिनां योग-

१ तत्राग्नि, क. ख. । २ अनावस्था, ग. च. । ३ के सिद्धे, ग. च. ।

ष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मा मवतु वक्तारम्। वाङ् मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितमाविरायुर्मयि धेहि वेदस्य वाणीः स्थ। ॐ भूर्भुवः स्वस्तत्सवितुरिति ॥४॥ दर्भपाणिस्त्रिः सावित्री मधीते। त्रींश्चादितोऽनुवाकान्। को वो युनक्तीति च।

---

मिच्छन् स्विष्टकृतः प्राक् स्विष्टकृत इति सूत्रच्छेदपरिज्ञानाद्वाथ शब्द इति मन्यन्ते ततोऽथ जपतीति। अथानन्तरमन्तेवासियोगकामहोमादित्यर्थः। ततः स्विष्टकृतादितन्त्रे समापिते। यद्वाऽथशब्दोयमनध्येतव्योऽनर्थकत्वात्। यद्वाऽथशब्दोऽङ्गव्युदासार्थस्तेन स्वाध्यायोत्सर्गे वक्ष्यति अथ जपति ऋतमवादिषमिति तत्प्राक् स्विष्टकृतो न भवति जप एव केवल इति स्थितिरयमेवार्थोज्यायान् ॥ ४ ॥

'दर्भपाणिस्त्रिः सावित्री मधीते' दर्भशब्द एकवचनान्तस्समस्यते दर्भः पाणौ यस्येति। पाणि–शब्द एकवचनान्त एवार्थलक्षणत्वाद्बहुव्रीहे रुपादानं दर्भपाणिरित्यधीत इत्यनेन संबध्यते न जपतीत्यनेन काकाक्षिगोलकवद्वोभयेनेति तत्पुनर्विचार्यं पच्छोऽर्द्धर्चशः सर्वमतेनेति केचित्। त्रींश्चादितोऽनुवाकान् वेदादाविषेत्वेत्यादीनधीत आचार्यो जपतीत्यर्थः। ब्रह्मचारी वाचार्याशक्तौ[1] यथाम्नायमभिव्याख्यातम्। को वो युनक्तीति चोपाकुर्महेऽध्यायान्। अध्यायापेक्षं मन्त्रे बहुवचनम्। तथा कुर्महेऽध्यायानिति स्थानानां व्याख्या। प्रथमस्थानमध्वरग्रहाः। उपतिष्ठन्तु[2] छन्दांसीति च जपतीति सबन्धः स्विष्टकृता[3]दिमार्जनान्तम्। स्वयंकर्तृकेऽपि ब्रह्मणे दक्षिणा दीयते। ब्रह्मन् होष्यामीत्यामन्त्रणादेव प्राक् स्विष्टकृत इति लिङ्गात्। अन्यस्तु दक्षिणान्ते नैव भवति। कुतो नित्यत्वे[4] तोऽपि प्रकृतिवत्प्राप्तिः। एतेन स्थालीपाकाः स्थालीपाकेषु पूर्णपात्रविधानादध्वरादिवदुपाकर्मतो दृष्यते तदुक्तं नैमित्तिकत्वात्स्वाध्यायाध्ययनं शिष्याध्यायसंबन्धितया निमित्त मुपाकर्महोमस्य। स्वाध्यायसंस्कारः पुरुषसंस्कारद्वारकः स्वाध्यायानिति संस्कारनिर्देशात्। अतश्चायमयुक्तः समाचारो नोत्सृजन्ति। उपाकर्मोत्सर्गेण भवितव्यम् अनुत्सृष्टस्य हि उपाकर्मप्रकरणेन स्वाध्यायाभ्याहतारम्भो नावसानम्।

---

१ शन्कोद्, क. । २ न्ते, ग. । ३ दा, घ. । ४ त्व, घ च. । ५–७ ० घ. ।
६ करण, ग. च. ।

उपाकुर्महेऽध्यायानुपतिष्ठन्तु छन्दांसीति च ॥५॥ तस्यानध्यायाः समूहन्वातो वल्मीकत्तारप्रभृति वर्षं न विद्योतमाने न स्तनयतीति श्रुतिराकालिकं देवतुमुलं विद्युद्धन्वोल्काऽत्यच्चराः शब्दाः । आचारेणान्ये ॥ ६ ॥ अर्द्धपञ्चमान्मासानधीत्योत्सृजति पश्चार्द्धे-

शब्दतस्तु सदृशे कालवती अदृष्टार्थे एते कर्मणी तदुक्तं मनुपाध्यायस्यं राजन्यादेश्च स्यात् । अस्तु चे त्किमत्रप्रमाणम् ॥ ५ ॥

'तस्यानध्यायाः' तस्याध्यापयितुरधीयानस्य वा एकस्यानध्याये सति इतरस्य सामर्थ्यात्स्यात् । यद्वा तस्य वेदस्यानाध्याया इति कुत एतत् । उपाकृत्योत्सृज्य वेति उपाकरणानन्तरं त्र्यहं पञ्चरात्रं वा नध्ययनं ततश्चतुरहे षडहे वा वेदारम्भणं ततः पञ्चाहे सप्ताहे वा काल (?) मनध्यापने वारम्भस्तत उत्तरेणाध्याया स्तेषां सामर्थ्यात् । वेदस्य न विद्यतेऽध्यायोऽध्ययनं येषु तेऽनध्यायाः कालास्तानाह समूहन्वातः । वायौ पांसुं समूहति पांसुसंयुक्तवायौ वहति सतीत्यर्थः । वलिकत्तारप्रभृति वर्षं पटलप्रान्तश्रावादारभ्यानध्यायो भवतीत्यर्थः । न विद्योतमाने । यावद्विद्योतते तावदनध्यायः । न स्तनयतीति श्रुतिः । यावत्स्तनयति तावदित्यर्थः । श्रुतिग्रहण मादरार्थम् । अकालिकं देवतुमुलं विद्युद्धन्वोल्काऽत्यचराः शब्दाः इतिहासप्रसिध्या देवादीनां युद्धं निर्गुणात्मकत्वाद्देवानां युद्धं तुमुलं भाव्येत ग्रहयुद्धं वा ज्योतिःशास्त्रप्रसिध्या देवतुमुलं स्यात् । आकालिकं द्वितीयेऽन्हि तात्कालिकं यावत् । विद्युद्धन्वो(द्धनो)ल्का महोल्केत्यर्थः । धन्वेति पाठे इन्द्रधनुर्दर्शने । उल्कामहोल्का सूक्ष्माया अवर्जनीयत्वात् । अत्यचराः शब्दा अतिक्रान्ताचरा ये गोमायुरुतादयः । सामध्वनिरपि योऽक्षराण्यतिक्रम्य वर्तते । आचारेणान्ये । आचारो यदि समाचारस्तदा रथ्यादौ वृषलसन्निधानादौ चानध्यायो न स्यात् तस्मादाचारेणाचाराभिधायकेन मन्वादिना येऽनध्याया अभिहितास्ते ततोऽवगन्तव्या इत्यर्थः ॥६॥

अर्द्धपञ्चमान् मासानधीत्योत्सृजति । अर्द्धपञ्चमाः । अर्द्धं पञ्चमस्य येषां मासानां तेऽर्द्धपञ्चमाः । अधीत्य ब्रह्मचारी । इतरथाऽध्याप्येति ब्रूयात् ।

१-४-० घ. । २ तदप्युक्तम्, क. ख. । ३ श्र. ग. । ५ शुं, ग. । ६ त्रिगु, ग. घ. । ७ लः, क. ग. च. ।

षष्ठान्वा ॥ ७॥ अथ जपति ऋत मवादिषं सत्य मवादिषं तन्मावीत् तद्वक्तारमावीदावीन्मामावीद्वक्तारम् । वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितं माविरायु र्मयि धेहि । वेदस्य वाणीः स्थ । ॐ भूर्भुवः स्वस्तत्सवितुरिति ॥ ८ ॥ दर्भपाणिस्त्रिः सावित्रीमधीते । त्रींश्चादितोऽनुवाकान् को वो विमुञ्चतीति विमुच्योत्सृजामहेऽध्यायान्प्रतिश्वसन्तु छन्दासीति च ॥९॥ प्रतिपदं पक्षिणीं रात्रीं नाधीयीत नात ऊर्ध्वमभ्रेषु ॥१०॥

उत्सृजति कति दिवसान्नाधीयीतेत्यर्थः। न पुनः स्वाध्यायमुत्सृजेत्तदुत्तरत्रानध्ययनविबाधनात्[1]। अन्यस्तूत्सर्गसंज्ञकं[2] कर्म करोति। तदुपरिष्टाद्वक्ष्यति तथाच स्मृत्यन्तरम्. ( या० अ० १,१४३ )

" पौषमासस्य रोहिण्यामष्टकायामथापि वा
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिरिति "

ततोऽर्थाद् गृह उपाकर्म कर्तव्यम्। पञ्चार्द्धषष्ठमासान्[3] सार्द्धपञ्चमासानित्यर्थः। तथाऽर्द्धं[4] षष्ठस्य मासस्य येषां तेऽर्द्धषष्ठाः। अधीत्योत्सृजतीति संबन्धः। मासेषु[5] तुल्यो विकल्पो नतु कृतार्थतयेति । [6]अध्ययनविधि ( धे ) राश्रयणाद्[7] विना कृतार्थतेति नास्ति प्रमाणम्[8] ॥ ७ ॥

उत्सर्ग माह अथजपति। स इति कृते कर्मणि प्राक् स्विष्टकृत इति एतंमन्त्रं जपति । अहं पञ्चरात्रं वाऽनध्यायस्तदनन्तरं शिथिलं स्वाध्यायः प्रवर्तते वेदाङ्गानां सहाध्ययनात् ॥ ८ ॥ ६ ॥

उत्सर्गोत्तरकालेऽनध्यायानाह-प्रतिपदं पक्षिणीं रात्रीं नाधीयीत प्रतिपदं रात्रीमुभयतो वासरान्न पठेत्। अत्यन्तसंयोगे द्वितीया नात ऊर्ध्वमभ्रेषु सत्सु नाधीयीत। एतच्च ज्योतिरावरणेष्वभ्रेषु द्रष्टव्यम्। स्मृत्यन्तरात् अत ऊर्ध्वग्रहणे समाप्तपाठादेवोत्सर्गादूर्ध्वं स्यात्। तस्मादतः पक्षिण्येवप्रतिपद्रात्र्यां[10] ऊर्ध्वमित्येवमर्थं वक्तव्यम्। तेन न सर्वा काचित्[11]प्रतिपद् गृह्यते। अर्द्धविद्धेऽनुपपत्तेः सर्वस्यास्तस्मादाद्यप्रतिपद् गृह्यते ॥ १० ॥

---

१ विधानात्, घ. । २ ज्ञा, ग. घ. । ३-४ ० ग. घ. च. । ५ संवत्सरे संवत्सरे, ग. च. । ६-८ ० घ. । ७ सश्रवणान्विता. ग. च. । ९ ० क. । १० रात्रेः, क. । रात्रादू ग. । ११ दिप्र ?, ग. च. ।

आकालिको विद्युत्स्तनयित्नुवर्षेषु ॥११॥ गोनामेषु मन्त्र-ब्राह्मणकल्पपितृमेधमहाव्रताऽष्टापदी[४] वैषुवतानि दिवाधीयीत वैषुवतमार्द्रपाणिः ॥१२॥ रुद्रान्न नक्तं न भुक्ता न ग्रामे ॥१३॥

आकालिकविद्युत्स्तनयित्नु[१] वर्षेषु अत ऊर्ध्वमित्येव प्रागुत्सर्गाच्चु एष्येते तात्कालिका उक्ताः । अयमाकालिकार्थ आरम्भस्तेन वलीकक्षारवर्षे स्यान्न कतिपयबिन्दुमात्रे ॥ ११ ॥

गोनामेषु-दिवाधीयीतेत्यन्तं सूत्रम् । नामेष्विति छान्दसः समासान्तः । तेषु यन्मन्त्रब्राह्मणकल्पं तद्दिवाधीयीतेत्यर्थः । मन्त्रो वसीयस्येहीति ब्राह्मणं प्रजापतिर्वा इत्यादि कल्पाश्चातुर्होत्रा गोनामिकमि[३]त्यादि कल्पे[४] पौरुषेयत्वादनित्ये नियमेन युक्त इति चेत्प्रवाहनित्यत्वाच्छिष्यादीनाम् । तथा च षडङ्गो वेद इति नित्येयमाख्या कल्पग्रहणं कुर्वन् दर्शयत्यङ्गानामपि वेदवदनध्याया भवन्ति इति[५] पितृमेधं मन्त्रब्राह्मणकल्पम् मन्त्रमत्रपितर इत्यादि । ब्राह्मण मिक्षुशलाकाद्यनुवाकत्रयम् । कल्पश्च प्राक् दक्षिणाचाराः पितृयज्ञ इत्यादि । पितृमेधश्चायं षट्कपा[६]ला येन पितृयागः । महाव्रतम् आयाहीकं महाव्रतमुपदधात्यँ[७]ादिकल्पः । य वा अयवा इत्यस्मात्प्राक् महाव्रतं पचादिति च ब्राह्मणं शाखान्तरे महाव्रतकर्मनामधेयत्वात् मन्त्राणां नामधेयत्वाच्च अविशेषेणानिर्देशादेवं व्याख्यानम् । अष्टापदी ब्राह्मणमथ इषाष्टापदीति । कल्पोष्टापदी स्यादिति । वैषुवन्तं ब्राह्मणं शाकलं कल्पश्चैकविंशोऽग्निष्टोम इत्यादि । ऊर्ध्वं[८] विषुवत इत्यस्मात्प्राक् महाव्रताष्टापदी वैषुवतानीति समासपाठः । वैषुवत[९]मार्द्रपाणिः । अधीयीतेतिशेषः । विषुवानाम ऋतुस्तस्य मन्त्रब्राह्मणेषु वैषुवतमार्द्रपाणिरधीयीतेत्यर्थः । कल्पेऽपि स्वर उदा[१०]त्तादिरस्ति ॥ १२ ॥

'रुद्रान्न नक्तं न भुक्त्वा न ग्रामे'-रुद्राणां मन्त्रोऽष्टावनुवाकस्थानम् । ब्राह्मणं रुद्रं वै देवा यज्ञादनन्तरं यन्नित्यादि । कल्पत[११]स्तस्यां श्रोणाविति गवीधुका[१२]तः । यदि रुद्रैर्भा[१३]न्तीति च ॥ १३ ॥

१ द्युत क. । २ वर्षके, ग. । ३ दि चातुर्होतृक गोनामिक मप्यनाहिताग्नि द्वादशरात्रं त्रिरात्रमेकरात्रं वा पाकयज्ञोपचारादग्निमुपचरति, इत्यधिकं घ. । ४-५ ० घ. । ६ लेन, क घ. । ७ ध्नाती, क. ग. घ. ग. च. । ८ ० क घ. । ९-१० अधिकं घ. । ११ ० क. घ. । १२ ० क घ. । १३ ती, क. ग. घ. ।

**शुक्रियस्य प्रवर्ग्यकल्पे नियमो व्याख्यातस्त्रयोविꣳशं तु संमील्य ॥ १४ ॥ गवां तु न सकाशे गोनामानि गर्भिणीनामसकाशेऽष्टापदीꣳ रेतो मूत्रमिति च ॥ १५ ॥ शुनाशीर्यस्य च सौर्ये चक्षुष्कामस्य चक्षुर्नो धेहि चक्षुष इति सूर्योऽपोऽ-**

शुक्रियं च नक्तं न भुक्त्वा न ग्राम इति च शब्दः । गायत्रीमित्यादि पञ्चविंशतिरनुवाकमन्त्राः । कल्पो[1] वातःप्रवर्गेत्यादि[2] शाखान्तरे ब्राह्मणं प्रवर्ग्यकल्पे नियमो व्याख्यातः स्वाध्यायमध्येष्यमाण इत्यत्र दिक्कालादिनियमो व्याख्यातः । नियमशब्दो व्रतेऽपि आरण्यं वर्तते । त्रयोविंशं तु संमील्य अधीयीतेति संबन्धः । त्रयोविंशं शुक्रियानुवाकं प्रकरणं संमील्याक्षिणी[3] इति गम्यते । तु शब्दो विशेषणार्थः शुक्रियनियमादधिकोऽस्य नियमविशेषो-यम् ॥ १४ ॥

गवां तु न सकाशे गोनामानि पूर्वसूत्रवदिदमपि व्याख्येयम् । गोनामानीति मन्त्रसमाख्याने तु गोनामान्येव काम्येत्यादीनि सामान्योपदेशाद्विजे[5] विक्षेप इत्यादीनि च गर्भिणीनामसकाशेऽष्टापदी अष्टासंज्ञा[6] गर्भिणी पशुः प्ररूढगर्भपादैश्चतुर्भिस्तस्याः[7] अभिधायकं ब्राह्मणमष्टापदीत्युपचर्यते । असकाशे नामाधीयीतेति नायं विधिः सत्रिणामसकाशेऽथ वाध्ययनस्य तस्मात्तत्सकाशेऽष्टापदीमधीयीतेति अधीयानं च मुक्त्वा रेतोमूत्रमिति च[9] चकारोऽसकाश इत्यनुकर्षणार्थस्तेन रेतोमूत्रसकाशे नाधीत इत्यर्थः । उपलक्षणार्थं च सर्वाशुचीनां पुरीषादीनाम् । विषुवतमार्द्रपाणिः । अधीयीतेति शेषः । विषुवान्नामक्रतुस्तस्य मन्त्रब्राह्मणेषु विषुवतमार्द्रपाणिरधीयीतेत्यर्थः । कल्पेपि स्वर उदात्तादिरस्ति पञ्चदुर्गो[10] येह्यन्वेमि[11] योगा[12] भावात् ( १०-१२ पर्यन्तो भागो द्वादशसूत्र व्याख्यारूप इति ज्ञेयम् ) ॥ १५ ॥

'शुनासीर्यस्य' सौर्ये चक्षुः कामस्य चक्षुर्नोधेहीत्यारभ्यदिवाधीयीतेत्यन्तं सूत्रम् । इतरथा आर्द्रपाणिरधीयीतेत्यनुवर्तते ततश्चार्द्रपाणेरध्यनं

---

१ निक, ग. च. । २ था, घ. । ३ क्षीणि, क. । ४ मे, ग. च. । ५ जो, क. । ६ जाद, ग. च. । ७ स्य, ग. च. । ८ ना, ग. च. । ९ चेति, ग. च. । १०-१२ ० घ. । ११ गो, ग. च. ।

**वगाहत इति च आदित्यसौर्ययाम्यानि षडृचानि दिवाधीयीत ॥ १६ ॥ उपाकृत्योत्सृज्य च त्र्यहं पञ्चरात्रमेके ॥ १७ ॥ वेदारम्भणे समाप्तौ चाकालम् ॥ १८ ॥ इति चतुर्थः खण्डः ॥**

प्राप्नोति । शुनासीर्यदेवत्ये द्वे ऋचौ सप्तत्वोतरणिरिति । चक्षुःकामस्य चकारस्यैके इत्यनुकर्षणार्थः । अग्नये भ्राजस्वतेऽष्टाकपालमिति त्रिहविश्चक्षुः-कामस्य तत्र सौर्ये याज्यानुवाक्ये तत्सूर्यस्य भद्रा अश्वा इति प्रातरग्निहोत्रा-भ्युदितेष्ट्यां पच्यते । इह त्वाद्ययोर्ऋचो रधीतत्वात् । अन्ये पुनश्चक्षुःकाम-स्येति विशेषणं चक्षु र्नोधेहीत्यस्या इच्छन्ति तदयुक्तं तस्याश्चक्षुर्नोधेहि चक्षुष इति स्वरूपनिर्देशाद्विशेषणमनर्थकं सुसंदृशंत्वावयमित्यर्थ इति । सूर्ये इति विशेषानुवृत्तेः सूर्यो (?) आपोऽवगाहत इति च याज्योपादानमनुवाक्यानि-वृत्यर्थं सूर्य आदित्ययाम्यानीति कानीत्याह । षड्ऋचानीति । एवं च सौर्या-दीनां रात्राविति निषेधः । अथवा सौर्यादित्ययाम्यानि ब्राह्मणानि नपुंसक-लिङ्गनिर्देशात्सामान्यापेक्षं वा नपुंसकत्वम् । एवं सति अयोदिवाध्ययनं सिद्धम् । तदेतरमन्यत्सन्नत्याह तरणि इत्यादीनां सौर्यत्वात् सिद्धे ग्रहणमनर्थकं स्यात् । एवं तर्हि ब्राह्मणापेक्षं नपुंसकत्वम् ॥ १६ ॥

'उपाकृत्योत्सृज्य' त्र्यहं नाधीयीतेति वर्त्तते पञ्चरात्रमेके विकल्पार्थं वचनम् ॥ १७ ॥

**वेदारम्भणे समाप्तौ चाकालम्** । वेदारम्भो वेदाद्यनुवाकः । वेदस माप्तिर्वेदान्तानुवाकः । इषेत्वा अग्निमनवेचाकालं कालादारभ्य यावद्वितीयेन्हि तत्कालमित्यर्थः । एतयोः प्रत्यारम्भसमाप्तिशब्दयोरयमेवार्थः । न मध्ये उपरि वा वेद आरभ्य पश्चादादि पठितव्य इति वेदं वापि यथाक्रममित्ये तदनुवचनात् ॥ १८ ॥

॥ इति पूरणव्याख्याने चतुर्थः खण्डः ॥ ४ ॥



१ हेतेति ख. ग. । २ त्त, ग. च. । ३ त्वा ऋक्तयो, ग. च. । ४ षा, ग. च. । ५ म्या, ग. घ. च. । ६–८ ० घ. । ७ मयो, ग. च. ।

## पञ्चमः खण्डः



### अथातोऽन्तरकल्पं व्याख्यास्यामः ॥ १ ॥

'अथातोऽन्तरकल्पं व्याख्यास्यामः'। अथ शब्दो विशेषाधिकारार्थः स्वाध्यायधर्मप्रकरणे। अनध्याया गवां तु न सकाश इत्यादयश्चानध्याया व्याख्याताः। अन्तरकल्पज्ञानादितिकर्त्तव्यता व्याख्याता। अन्तरकल्पस्तु बहुभिः कर्त्तव्यतया युक्तत्वात्पूर्ववत्स्वाध्यायकर्मणः सकाशाद्विशिष्टतम इति कर्त्तव्यताबहुत्वविशेषणतोऽधिक्रियते। अधिकृतस्य हीतिकर्तव्यता संबन्धः। अन्तरेऽन्तराले राजसूयस्थण्डिलाग्न्योः कल्पधर्म इति अन्तरकल्पं वक्ष्यमाणकर्मणो नामधेयं राजसूयाध्यायसमाप्तिनिमित्तं नैतदस्ति प्रवृत्तिनिमित्तं चान्तरशब्द उभयापेक्षत्वात्। व्याख्यास्याम इति गौरवेण श्रेयस्करत्वमव्ययनित्यशब्दत्वेऽप्यस्य सूचयति। अथवाऽवबुद्धवेदार्थो गुरुणाऽनुज्ञातः कश्चित्। स्वान् गृहान्प्रस्थितः शब्दविद्यामधीयानैः पथि संगतस्त्वस्य तैः सह किलैवं वाद आसीत्। यथा अपान्नप्तृकमविनाशेनावयवादिना [यदि न] ............अधीयेहं ततोऽग्नौ प्रवेक्ष्या(क्ष्या)मि इति प्रतिज्ञाय तमधीयानो विनाशितत्वात्प्रतिज्ञार्थनिर्वहणायाग्नौ........पणोदितैः। ऊरुवर्णाय गुरोर-गृहेऽन्तरा क्षुतद्वयश्रुत इत्यन्तरेशब्दयोगः। तथा लोके एवं विधेश्वाभानको विधीयते। अन्तरो वित्तायणीयात्वं मातुरिति तस्योपकारायेदमूर्ध्वदैहिकं कल्पितं तैरित्यन्तरकल्प इति। ऐतिहासिकी अन्तरशब्दस्य व्युत्पत्तिर्नचात्रैतद्यथोक्तं किं चोद्येन प्रतिज्ञाकर्त्तव्यमात्महननं निर्वाहितवान्। दुःशासनस्य रुधिरपानमिव भीमसेन इति कथितं तस्योदकदानादि। आत्मघातकानां मन्वादिनिषिद्धत्वादुदकक्रियादेरिति। यस्मादकर्तव्यापि किंचित्प्रतिज्ञाय केनचिन्निमित्तेन तन्निर्वाहने लोके गर्ह्यते प्रायोपवेशनात्प्रत्यवसितदुर्योधनवत् नारायणबलिपातैस्तस्य कृतो भविष्यति प्रत्यहं नित्यत्वात्कर्मणोऽस्य। ऐतिहासपक्षेऽनित्यत्वपरिहारः। अन्यस्तु नायं स्वाध्यायधर्मो नाप्यन्तरे-

---

१ इ, क.। २–९–० घ.। ३ ह, ग. च.। ४ तर, ग. च.। ५ धा, ग. च.। ६ त्त, ग. च.। ७ घंसद्विवोघेश (?), ग. च.। ८ हे, ग. च.।

दर्भमयं वासः परिधायाचम्यापां नप्त्र इति तीरे जपि-

स्योदकद्योतकक्रिया । अपि तु स्वाध्यायोत्सर्जनविधिः[२] । तथा च नायं स्वाध्यायधर्मोऽस्त्वाभिवादादाविव । [न च] तर्कस्योदकक्रियायामाचार्याणां च तर्पणं श्रूयते । आचार्यान्पितृधर्मेण तर्पयन्तीति । तस्मादुत्सर्गविधिरयमुदकसमीपे । [४]तथा च स्मृत्यन्तरम् ( या० १-१४३ )

जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः—

इति विधिश्चायं वक्ष्यमाणस्तथा बहूनां गृह्ये श्रूयते मध्यमायामष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वा यो भ्यवयन्ते ताश्चैवदेवतास्तर्पयित्वाचार्यानृषीन्पितृंश्चैतदुत्सर्जनम् । अथातोऽध्यायोपाकरणमित्युपाकरणं मुक्त्वा तदुत्सर्जनमुक्तवान् । मध्यमाष्टका च तैष्या ऊर्ध्वं विज्ञेया । तथा च स्मृत्यन्तरम् ( या० १-१४३ )

' पौषमासस्य रोहिण्यामष्टकायामथापि वेति ' ।

रोहिणी च पौषस्य सितपक्षे दशम्यामेकादश्यां वा भवति । इह चोक्तम् । अर्द्धपञ्चमासानधीत्योत्सृजति पञ्चार्द्धषष्ठान्वा तत्र श्रावण्या आरभ्य तैष्यां पञ्चमासा भवन्ति । अत एव स्मृत्यन्तरम् ( या० १-१४३ )

' पौषमासस्य रोहिण्यामष्टकायामथापि वेति ' ।

यदा तु तस्मिन्काले न केचनोत्सर्गमनुतिष्ठन्तो दृश्यन्ते । तदा किं कुर्मः कमुपलभेमहि । शास्त्रार्थस्तावद्यथाऽस्माभिर्वर्णित इत्यलमतिप्रसङ्गेन[२] प्रकृतमभिधीयते अन्तरकल्प इति कोऽर्थः । उपाकरणात्परतरं भवति तदर्वाक् न भवतीत्यर्थः । अत एवाथातः शब्दौ कृतौ ॥ १ ॥

' दर्भमयं वासः परिधायेत्यादि ' नियमार्थं वचनम् । आचमनं स्मृतिगृहितम् । अपां नप्त्र इत्यनुवाको गृह्यते कल्पस्य मन्त्रत्वात् । वसन्ताय कपिञ्जलानितिवत् । एतदेवेतिहासस्य मूलं मन्यामहे अस्मिन्नेव कर्मणि तैः सह जवाजवानाविनाशितमित्यपि श्रूयते । [४]वाम्नाय अपां नप्त्र इत्यनुवाकमपि जपित्वा वेदजपफलेन युज्यते इति नूनमेतदग्निप्रवेशप्रतिज्ञाने कारणं नेत्येवबुद्धेवेदार्थतत्वो निष्प्रयोजनेऽध्यापने प्रतिजानीतेऽतोनुवाको जप्त(पित)-

१—९—० घ. । २ धेः, ग. च. । ३ भोन्तक, ग. च. । ४ य, ग. च. । ५—६—० ग. च. । ७ दं, क. । ८ सा, ग. च. । १० ता, ग. । त्ता, च. । ११ नह्म, ग. च. । १२ ध्य, ग. च. ।

स्वाऽपोऽवगाह्य ॐ भूर्भुवः स्वस्तत्सवितुरिति ॥२॥ दर्भपाणिस्त्रिः सावित्रीमधीते त्रीं॰श्चादितोऽनुवाकान् ॥ ३ ॥ आपो देवीर्हविष्मतीरिमा निग्राभ्यां स्थ महित्रीणामवोऽस्तु अग्नेरायुरसि देवी रापो अपां नपाद्देवीरापो मधुमतीरग्नये स्वाहा रात्री॰रात्रीमित्यष्टौ ॥ ४ ॥ या ओषधयः समन्यायन्ति पुनन्तु मा पितरोऽग्नेर्मन्वे सशेवृधमधिधाः कया नश्चित्र आभुवदूतीति

व्योऽनुवाकान्ते हि शुष्कशब्दः। व्याहृतिशब्दात्सतः कपिलेशब्दान्तरोच्चारेण विनापां नप्त्र इति जपयज्ञपचस्तत ऊर्जो नप्त्र इति मन्त्रान् जपन् दर्भसमूहानुत्तरस्यादिना पूर्वान्तं जानीयात्। तीरेतीरेर्थे उदकसमीपे अपोऽवगाह्य मर्ज्योन्मर्ज्य वासनं व्याख्यातम्। ॐ भूर्भुवः स्वस्तत्सवितुरिति ॥ २ ॥

'दर्भपाणिः सावित्री मधीत' इति व्याख्यातम्। त्रींश्चादितोनुवाकान् अधीत इति प्रकृतेन संबन्धः ॥ ३ ॥

'आपो देवी रात्री चेत्यष्टौ'। आपो देवीरित्यादयोष्टावनुवाकाः। अनुवाकादि प्रतीकत्वादनुवाकाधिकाराश्च ॥ ४ ॥

'या औषधय इत्यादि' अग्नेर्मन्वन्त इत्यन्तम्। एते चत्वारोऽनुवाकाः। सशेवृधमधिधाः कयानश्चित्र आभुवदिति तिस्रस्तं श॰ योरावृणीमह इति मार्जयित्वाऽऽचार्यान् पितृधर्मेण तर्पयन्ति द्वादशानुवाकाश्चाध्येतव्या अपि अधीत इति प्रकृतसंबन्धात्। स एताभिः पञ्चभिर्ऋग्भिर्मार्जनं कृत्वा तत आचार्यान् पितृधर्मेण तर्पयेयुरित्यर्थः। आचार्यशब्दो मन्वादि संबन्धिशब्दत्वेन स्मृतिः। उपनीय तु यः शिष्यमित्यादौ सूत्रकार भाष्यकाराद्याचार्याः। आचार्य आचारं ग्राहयतीत्यादिरिति वचनात् पितृवत्तर्पणमसौ तृप्यध्वं? तस्मै ते स्वधेति चोदकाश्चोदकाञ्जलाञ्जलीन् दद्युः पितृतीर्थेन प्राचीनावीतिनः। तर्पयन्तीति बहुवचनमन्तेवासिभिः

१ म्याः, क. । * दिति, क. घ. २ किल, घ. । क्वि, ग. च. ॥ ३ ० क. घ. । ४ ज्यात्, घ. । ज्जो, ग. च. ॥ ५ ज्जा, ग. च. । ५-६ ० घ. । ७ तु, क. ग. च. । ८ धी, क. । ९ भू, ग. । १० दू, ग. । ८-१० ० घ. । ११ श्चा, ग. च. । १२ ० ग. घ. च. ।

**तिस्रः ॥ ५ ॥ तच्छंयोरा वृणीमह इति मार्जयित्वा वासांस्युत्सृज्याचार्यान्पितृधर्मेण तर्पयन्ति ॥ ६ ॥ श्राद्धकल्पेन शेषो व्याख्यातः ॥ ७ ॥ इति पञ्चमः खण्डः ।**

---

सहाधिकारार्थं दर्भपाणिस्त्रिः सावित्रीमधीत इत्येकवचनात्पृथगप्यधिकारो गम्यते–सहाधिकारपक्षे तु मध्यकेन वचनेन श्राद्धादिशेषं कुर्युर्विभक्तदायास्तत इह ॥ ५ ॥ ६ ॥

'**श्राद्धकल्पेन शेषो व्याख्यातः**'। शेष आचार्यतर्पणस्यांशभूतो विधिना श्राद्धकल्पेन श्राद्धमधिकृत्योक्तेन अनुगुप्तमन्नमित्यादिना पितृदानं चाचार्याणामेकैकस्य तर्पणवदेकोद्दिष्टविधानं च । ऐतिहासिक्यान्तर शब्दव्युत्पत्तौ अन्तरश्चैकोद्दिष्ट विधानेनेति प्राप्त मेतत् परमार्थतस्तु ब्राह्मणभोजनमेव शेषविधौ श्राद्धकल्पीयमतिदिश्यते पितृदेवे भेददर्शनात् । कस्य तत्र बहूनन्तविकानित्यादिनां पिण्डनिधानं विधाय ततस्तच्छेषो ब्राह्मणभोजनं श्राद्धकल्पेनेति दृष्टवान् इतरथा एवं ब्रूयात् ॥ ७ ॥

इति पूरणव्याख्याने पञ्चमः खण्डः ॥ ५ ॥



---

१–२–० घ. । ३ भा श्राद्धे, ग. च. । ४ ० ग. च. । ५–६ ० घ. । ७–८ ० घ. ।

# षष्ठः खण्डः।

अथाऽतोऽग्निं प्रवर्तयन्ति ॥ १ ॥ उत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे वेद्याकृतिं कृत्वाहवनीयस्थाने सप्तच्छन्दाꣳसि प्रतिष्ठाप्य विष्टरान् दर्भमुष्टीन्वा दक्षिणाग्निस्थाने प्रौगाकृतिं कौशितं खात्वा पश्चादुत्करमपां पूरयित्वा गार्हपत्यस्थानेऽग्निं प्रणीय युञ्जानः प्रथमं मन इत्यष्टौ हुत्वाऽऽकूतमग्निं प्रयुजꣳ स्वाहेति षड्

'अथातोऽग्निं प्रवर्तयन्ति' अथेत्यानन्तर्ये अन्तरकल्पादनन्तरमत इति तद्धेतुकमग्निप्रवर्तनम्। एतदेव मूलं यदग्नेतारोऽपां नप्तृके समाप्तेऽनन्तरमेवाग्निप्रथमाननुवाकानारभेत्तेन गोदोहनविधिरत्रेति। यदन्तरमग्निप्रवर्तनकर्मणोरानन्तर्येण तत्कर्मप्रयोजनेऽध्ययने कर्म न लभेत सेद्यचार्चेयते (?) ॥ १॥

'कथं कृत्वा प्रवर्तयन्तीत्याह'-उत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे वेद्याकृतिं कृत्वा स्थण्डिलमग्निं प्रवर्तयन्तीत्यर्थः। उत्तरस्मिन्देशे पूर्वस्मिन्वा शुचौ वेद्याकृतिदर्शिन्या सदृशीं वेदादिसंस्कारवर्जितं कृत्वाऽग्निप्रवर्त्तनं कुर्यादित्यर्थः। आहवनीयस्थाने प्राग्देशे वेद्या आहवनीयसदृशदेशे चतुरस्र मायतनं कृत्वा तत्र च्छन्दांसि गायत्र्यादीनि जगत्यन्तान्यक्षरवृद्धिक्रमेण प्रतिष्ठाप्य कथं विष्टरान् दर्भमुष्टीन् कल्पयित्वा स्वतछन्दसां प्रतिष्ठानामभावसंज्ञकैः शब्दैर्विष्टरान्दर्भमुष्टीन्कल्पयित्वा स्थापयेत्। विष्टरदर्भपुञ्जस्याकारकृतो विशेषः। दक्षिणाग्निस्थाने प्रौगाकृतिं कौसितं खात्वा प्रौगस्याकृतिं प्राङ्मुखं शकटाकारं ह्रदस्य कौसित इति संज्ञा कौसितान्मार्जयित्वेति व्यवहारार्थम्। अत्र ह्रदे कुसीतयी राक्षसी। वामदेवस्तु तेनाख्यानेनाग्निना प्रवेशितेति कृत्वा कौसितो ह्रद उच्यते पश्चादुत्करं कृत्वेत्यध्याहारः। पालिरुत्करः पश्चात्कौसित इति ह्रदः। अयं पूरयित्वाद्भिः सर्वत्र पूरयेयुरित्यर्थः। सत्रेत उक्ता श्रुतिरग्निः प्रवर्तते अन्तर कालापेक्षा गार्हपत्यस्थाने विषयसप्तमी गार्हपत्यस्थाने पश्चात्तस्या वेदेर्गार्हपत्यसदृशमायतनं कृत्वाग्निं प्रज्वाल्य जन्माग्निं चौपासनं वा प्रज्वाल्योद्दीप्य

१ त्वम्, ग.। २ रभेत, ग. च.। ३-४ ० घ.। ५ तिं, घ.। निठ, ग. च। तिनिस, क.। ६ खः, ग. च.। ७-८ ० क. घ.।

**जुहोति विश्वो देवस्य नेतु रिति सप्तमीम् ॥२॥ यज्ञियानाᳫँसमिधां त्रीᳫँस्त्रीन् समित्पूलानुपकल्प्य प्राक्स्विष्टकृतस्तिष्ठन्तो व्याहृतिपूर्वकं खण्डिलस्यादितस्त्रिभि रनुवाकै रेकैकेन स्वाहाकारान्ताभिरादधति ॥ ३ ॥ आपोहिष्ठीयाभिः कौसितान् मार्जयित्वा**

तस्मिन्नग्नौ युञ्जानः प्रथमं मन इत्यादयः पञ्चदशाज्याहुतीर्जुहुयात् । सर्वत्रानादेशे आज्य मेव ज्ञातव्यम् । स्विष्टकृद्दर्शना दाज्यभागादितन्त्रस्रुवाद्यन्तश्च प्रधानस्थानेऽत्र स्रुव एव स्रुगं्[१] भवति तथोपरिष्टाद्वक्ष्यामः ॥ २ ॥

**'यज्ञियानां समिधां स्वाहाकारान्ताभि रादधा(ध)ति'** । ततः समित्पूलांस्त्रीं स्त्रीन्यज्ञियानुपकल्प्य पश्चादग्नेस्तिष्ठन्तः प्राक्स्विष्टकृतस्तु आदधेति खण्डितस्याग्नेस्थानस्यादितास्त्रिभि रनुवाकै रनुवाकमूलै र्यथासंख्यवीप्सावचन मेकस्य मूलार्थं व्याहृतिपूर्व मनुवाकत्रयस्य चाहुति त्रयेण यथासंख्यमुत समस्ताभिरिति यथासंख्यं व्याहृतिपूर्वमित्येकवचनात् ॥ ३ ॥

**'आपोहिष्ठीयेति स्वस्ति वाचयन्ति'** । आपोहिष्ठीयै र्मार्जनं तन्त्रपक्षे विचारणीय मुदग्राहवदिति चेन्न तत्र नक्षत्रदेवताद्यपि विधीयते । अनुवादैः कौसितोदके विनोदनार्थः स्यान्मार्जनस्य । अन्यस्तु कौशितानिति तस्यैव मार्जनमुदकस्योद्धारः । अत एवाहवनीयस्थाने छन्दोर्था दर्भमुष्टयो विष्टरा वा तेऽपि प्रवहितव्याः । गार्हपत्यस्थाने पश्चादग्निस्तत्संबन्धिनो भस्मादि इयांस्तु विशेषः कौसितस्य समन्त्रमितरयो स्तूष्णीं धानाभिरिति नियमः । ब्राह्मणान् त्रिप्रभृतींस्त्रीन्वा स्वस्तिवाचोदकपूर्वमेकैकस्मै ब्राह्मणाय धाना दधुः पूर्ववदत्र सहाधिकारो वा वाचयन्तीति वचनात् । तथाग्निं प्रवर्त्तयन्तीति बहुत्वोपक्रमात्सर्वेऽपि तिष्ठन्त आदधतीति बहुत्वं न ब्रह्माद्यपेक्षमिति । आकृतिं कृत्वैवं ब्रूयाद् गार्हपत्यस्थानेऽग्निरिति वा सत्रिवदग्निमस्ति वापोऽत्र गार्हपत्यस्थानेऽग्निं प्रज्वाल्येति लिङ्गाल्लौकिकारणेयोग्निरिति गम्यतेऽन्यथाग्निं प्रणीयेति तस्मात्प्रज्वाल्येतिवचनाल्लौकिकं विज्ञाय जातकर्मादयो निर्मथ्य क्रियन्ते मन्थनं च द्वि( नहि ) संस्कारतया किं तर्हि उत्पत्तिर्न

१ स्रुव, ग. च. । ० घ. । २ दम्पति, ग. च. । ३ पू, क. घ. । ४ द, ग. च. । ५ ० ग. च. । ६ च्यो, घ. । ७-९ ० घ. । ८ द्वि०, क. ।

**धानाभि र्ब्राह्मणान्स्वस्ति वाचयन्ति धानाभि र्ब्राह्मणान्स्वस्ति वाचयन्ति ॥ ४ ॥ इति मानवे षष्ठः खण्डः ॥ ६ ॥**

चोत्पति (म्) संस्कारतयापेक्षन्ते भूतानि साग्निका इति ब्रूमः पक्षेऽसंस्कृतेऽग्नौ क्रियन्ते आहृत्यवद्ध्यान्मथित्वेत्यादिवचनात् । उक्तं चात्र शिबिरस्वामि पादै र्नास्ति वचनस्यातिभारः किमिव वचनं कुर्याद्यावन्न प्रामाण्यं संस्कृतेग्नौ यथा भवतीति । अन्यस्तु यन्मथित्वारणिपक्षे पक्षान्तराभित्यमेव न वैकल्पिकं ये शाखान्तरीयाद्वचनं तूष्णीं निर्मथ्यो आष्ट्रः संतपनीयेत्र दीप्यमानवचनं तत्र लौकिको न त्वारण्येयः कथितः । अयं तु विशेषः । स यत्रेता(?)र्थसमन्त्रकमात्मने नोत्पद्यते सश्रौत (:) यस्तूत्पद्यते ते जातकर्मादौ तूष्णीं निर्मथ्य परमेष्टिविधानेन चोत्पद्यते स स्मार्तः । अन्यतो यत्र दीप्यमाने स लौकिक इत्येषा विविधा स्थिति रग्ने (:) स्वस्ति ब्रूहीत्युक्तोदकपूर्वं धाना दत्वाऽग्निं युञ्जानः प्रथममित्यादौ त्रिस्थानमध्यमुपक्रमन्ते । स्विष्टकृत्पाठे अध्वर्युब्रह्मत्वपूर्णपात्रादन्यैः ॥ अथ किमर्थं मार्गवासा इत्यादि धर्मगणमध्ये स्वाध्यायोपाकरणादयोऽग्निप्रवर्तनान्ता अध्ययन धर्माण उच्यन्ते तत्र पाठे एतेषु ब्रह्मचारिण एवाधिकारः स्यात् । इहत्वनारभ्य पाठात्सर्वेषा मधिकारः सिद्धः । तस्मादन्यार्थे अध्ययने गोनामादि धर्मवदन्तर कल्पाग्निप्रवर्तनकर्मणी स्यातां तेनैकः कुरुते जन्माग्न्यादौ यथाधिकारं यजमान एव समेत्य समित्पूलांस्तिष्ठन्नादध्यान्न ऋत्विक् । एष विधिः प्रयोक्तृभेदः (भेद) प्रयोगभेदमपेक्ष्य बहुत्वं प्रवर्तयन्ति वाद्-(च) यन्तीति । एवं मध्येपि तिष्ठन्तो प्यादधतीतिबहुवचनं नतु ब्रह्माध्वर्य्वपेक्षम् ॥ ४ ॥

इति पूरणव्याख्याने षष्ठः खण्डः ॥ ६ ॥



१-६ ० घ. । २ प्रे, ग. च. । ३ क्षोप ० क. । ४ यथा, ग. च. । ५ धन्, ग. च. ।

## सप्तमः खण्डः

अथोपनिषदर्हाः । ब्रह्मचारी सुचरिती मेधावी कर्मकृद्ध-नदः प्रियो विद्याऽवा विद्ययान्वेष्यन् ॥ १ ॥

---

अस्मिन्नेव प्रकीर्णे[1] स्नातकाधिकारे ब्राह्मयौन[2]संबन्धाः कर्त्तव्या इत्याह 'अथोपनिषदर्हाः' अथेति वाक्योपन्यासार्थः । उपनिषच्छब्दो वेदैक-देशवचनोऽपीहकृत्स्ने वेदे वर्तते शास्त्रान्तरैरविरोधादितरथा अधियज्ञादि कस्य वेद[3]स्यानर्हा अपि व्याप्यस्य ब्रह्मचारिदुराचारादयस्तच्च शाखान्तरविरु-द्धम्[4] । यद्वा रहस्यत्वात् वेदार्थ उपनिषच्छब्देनोच्यते तथा तानि तीर्थानि ब्रह्मण[5] इति वक्ष्यति । किम[6]र्थमेव सूत्र्यते । अथाप्येवं[7] विधेषु व्या-ख्यात[8]म् स हि गरीयो वेदादिस्तस्याऽर्हा[9] योग्याः[10] । अथोपनिषदमर्हतीति कर्म-ण्याणित्यण् । ता[11]नाह ब्रह्मचारीत्यादि ब्रह्मचारि ग्रहणमनर्थकं तस्यैवाध्य-यने तदर्थावबो[12]धेनैव बाधिकाः । स्नास्यन् गां कारयेदित्युक्तत्वात् । एवं तर्हि हस्तस्य यद्विद्याधिगमो मन्वादिषु श्रूयते विद्यार्थं षडिति । संवत्सरे संवत्सरे द्वौ मासौ गुरुगृहे वसेदिति चा[13]तो ब्र[14]ह्मचारि ( चर्या ) चरिणो वेति[15] ब्रह्मचारिग्रहणम् । सुचरिती मार्गवासस्त्वादि यमनियमजातसाधुचरितं यस्यास्तीति सुचरिती ग्रहणधारणाय समर्थो मेधावी मतिमानिति यावत् । सुचरितीत्यनेनैव सिद्धे कर्मवद्ग्रहणमतिशयवत् सुचरितीत्यनेनैवार्थः । अथवा दुर्मेधा अपि कर्मयुक्त उपनिषदर्हः । धनदः पूर्वोक्तगुणे[16]भ्योसौ विशिष्टः[17] । प्रियो बन्धुत्वादिप्रीतिकारणो मेधा[18]वीति अयमप्यपर पूर्वाविद्यामन्तरे [19]च[20] विद्याविनियमः । इतरथा भृताध्यापनाध्ययने स्याताम् । नहि धनेनैवभृतिः किं तर्ह्यनेनापि परिभाषितेन वस्त्रादिना । वा शब्दश्चार्थे विद्यां चेति । [21]आचार्य-पुत्र इति मनुना पठितानामुपसंग्रहार्थः । वाचिकः सुचरिती सुचरितीत्यने-नैवसिद्धम्[22] ॥ १ ॥

---

१ प्रकरणे, घ. । २ यौवन, क. ग. घ. । ३—४ ० घ. । ५ मि, ग. च. । ६ व, ग. च. । ७ तव्याः, ग. । तव्यः, च. ॥ ८—९ ० घ. । १०—११ ० घ. । १२ वै, च. । ० ग. ॥ १३ वा, घ. । १४—१५ ० घ. । १६ भ्यासो, ग. च. । १७ विहितः, ग. च. । १८ भिः, ग. च. । १९—२० ० घ. । २१—२२ ० घ.

**तानि तीर्थानि ब्रह्मणः ॥ २ ॥ भार्यां विन्दते ॥ ३ ॥ कृत्तिका स्वाति पूर्वैरिति वरयेत् ॥ ४ ॥ रोहिणीमृगशिरः श्रवणश्रविष्ठोत्तराणीत्युपयमे तथोद्वाहे यद्वा पुण्योक्तम् ॥ ५ ॥**

---

'**तानि तीर्थानि ब्रह्मणः**'। तान्येतानि ब्रह्मचर्यादीनि तीर्थानि पात्रभूतानि ब्रह्मणो ब्रह्मयज्ञस्य संप्रदानकारणान्यर्थः। अथवा तावन्त्येभिरिति तीर्थानि गङ्गादीनामवतरणवर्त्मानि निष्ठानार्थं पारगमनार्थं यथा तथैतानि ब्रह्मणः शब्दब्रह्मण एतैस्तीर्थैः शब्दब्रह्मणि निष्ठायां तत्र हि निष्णातस्य परब्रह्मावाप्तिः श्रूयते। एवमर्थं हि तीर्थेन संप्रदानस्योपमानम् ॥ २ ॥

'**भार्यां विन्दति(ते)**'–यद्यपि रागतो भार्यावेदने प्रवृत्तिस्तथापि न विधिमन्तरेण शास्त्रीयत्वं भार्यावेदनस्य लभ्यते तस्माद्विन्देतेति प्राप्ति(ः) विन्दते इति छान्दसो वर्त्तमानोपदेशः। पञ्चमलकारो वा छन्दोवत्सूत्राणीति कृत्वा भार्यामिति भाविनी संज्ञा सक्तून्पिनष्टीतिवत्। अपर आह। सत्यं-भाविनी चेयं संज्ञा तथापि यूपं छिनत्तीतिवत् संस्कारशब्दाय भार्यां विन्दत इति यथाच्छेदनादिना धर्मेण यूपो भवति एवं वक्ष्यमाणैर्वेदनधर्मैर्भार्यादीनि एवं च यूपं वचनान्यतोऽनवगते भार्यामित्येकवचनं विवक्षित मेवं चेद्व(द्वन्)-ध्याष्टमेऽधिवेद्याऽब्दे इत्यादि निमित्ते विवोढापि द्वितीया नैव भार्या शब्द-वाच्या भवति न तया तवन्म(द्धर्मा)धिकारो निवर्तते तदुक्तं धर्मप्रजासंपन्ने(षु)-दारे(षु) नान्यां कुर्वीतेति ॥ ३ ॥

कथं विन्दत इत्याह **कृत्तिकास्वाति पूर्वैरिति वरयेत्**। कथं तृ-तीया यावता कृत्तिकास्वातिपूर्वेष्विति सप्तम्या भवितव्यं सप्तम्यर्थस्य साधकत्वेन विवक्षितत्वात्तृतीया। नक्षत्राभिप्रायं पूर्वैरित्युक्तमाषाढादीनां स्त्रीत्वात्पूर्वाभि-रिति स्यात्। द्वन्द्वगर्भोयं द्वन्द्वः। इतरथा द्वन्द्वेघित्वात्पूर्वनिपातः स्यादिति करणादन्यैरपि पूर्वोक्तैर्नक्षत्रैर्वरयेत् ॥ ४ ॥

रोहिणी प्रशस्तानीति गम्यते तथा स्वातौ तथेति उद्वाहे च रोहिण्या-दीनि शस्यन्ते यद्वा पुण्योक्तं वा शब्दः स्वार्थे यच्च नक्षत्रं पुण्ये पुण्यसूच-

---

१–० ग. घ.। २–४–० घ.। ३–० ग. च.। ५ यावत्, घ.। ६–७–० घ.। ८–९ ० घ.।

**पञ्च विवाहकारकाणि भवन्ति वित्तꣳ रूपꣳ विद्या प्रज्ञा बांधव इति ॥ ६ ॥ एकालाभे वित्तꣳ विसृजेद् द्वितीयालाभे रूपं तृतीयालाभे विद्यां प्रज्ञायां बान्धव इति च विवहन्ते ॥७॥ बन्धुमतीं कन्यामस्पृष्टमैथुना मुपयच्छेत समानवर्णामसमा-**

केषु शास्त्रेषु पराशरादिविरचितेषु उक्तं तदपि शस्त मुद्वाहे इति करणस्यैवायं प्रपञ्चो यद्वा पुण्योक्तमिति ॥ ५ ॥

'**उद्वाहे च पञ्चविवाहकारकाणि भवन्ति**' उद्वाहो विवाह इति तुल्यार्थौ कारकाणि हेतुभूतानीत्यर्थः । पञ्चभिरेव हेतुभिर्विवाह–संबन्धो भवति तदाहवित्तमित्यादि वित्तं गोहिरण्यादि रूपं पुरुषलक्षणं ज्योतिः शास्त्रोक्तम् । विद्या आन्विक्षिक्यादिः । प्रज्ञा देश ( शे ) काले चाऽविधुरमतित्वम् । बन्धुरेव बान्धवोऽभिजनः । अवदातकुलप्रसूतत्वात् ॥ ६ ॥

पञ्चैव यदाऽसमुचितानि[२] तदा कथं कुर्यादित्याह । एकालाभेवित्तं विसृजेत् वित्तस्यानित्यत्वात् । भूत्वापि न भवति अभूत्वापि च भवतीति रूपादिभिर्धनं लभ्यत एवेति । द्वितियाऽ लाभे रूपम् ( विसृजेदितिसर्वत्र ) द्वितीयस्य विवाहकारकस्यालाभे विद्यादिभिस्तिसृभिर्विवाहः । विद्यादिभि राधेयं रूपं तस्याहार्यत्वात्[३] विद्यादिन्यलङ्कारभूतानि पुंसः । तृतीयालाभे विद्याम् । अनधीतवेदो[४] विद्या मधिगन्तुमल्पप्रयत्नोऽपि शक्नुयाद्यदि प्रज्ञावान् बन्धुमांश्च भवतीतिभावः । तथा प्रज्ञायां बान्धव इति च । असमासकरणं च केवलायामपिप्रज्ञायां बान्धवेऽपि च केवले विवहन्ते कन्यां वरयन्ते ददते-च । एवं मत्वेति नावधारणं वृत्ति शीलं च विवाहकारणं च केवलायामपि पूजार्थं बहुवचनं दर्श्यते । शद्धेषु पञ्चसु वित्तादिषु न शीलहीने ते विवहन्ते ॥ ७ ॥

कन्यां बन्धुमतीं बन्धुरिह भ्रातोच्यते भ्रातृमतीमित्यर्थः । अस्पृष्टमनभिज्ञातं मैथुनं सुरतं यया साऽस्पृष्टमैथुना । अनन्यपूर्वा वा उपयच्छेत स्वीकुर्यात् । दद्याच्च उभयत्र चायं नियमः पूर्वोक्तेऽपि प्रतिग्रहीतुश्च तथा चानेन

१ वा, क. घ. । २ निगम्य, ( म्याः ), क. ग. च. । ३ हेत्वात्, ग. च. । ४ अधी, ग. च. । ९–८ ० घ. । ६ ० क. । ७ ० ग. च. । ९ क्ता, ग. । क्तो, च. ।

**नप्रवराᳬ यवीयसीं नग्निकाᳬ श्रेष्ठाम् ॥ ८ ॥ विज्ञानमस्याः कुर्यादष्टौ लोष्ठानाहरेत्सीता–लोष्ठᳬ वेदिलोष्ठं दूर्वालोष्ठं गोमयलोष्ठं फलवतो वृक्षस्याधस्ताल्लोष्ठᳬ श्मशानलोष्ठ मध्वलोष्ठमिरीणलोष्ठमिति ॥ ९ ॥**

---

एवाभिप्रायेणाख्यातद्वयस्य प्रयोग उपयच्छेत विवहन्तीति च । अस्पृष्टमैथुना च सा ज्ञेया अनभिप्राप्ता स्त्रीवन्मणि चतुर्धावरणम् । अनुपभुक्ता नक्ता (ग्ना) तथा च स्मृत्यन्तरम्—

" तस्मादव्यञ्जनोपेतां रजसा मा ( ना ) प्त–यौवनाम् ।
उपभुक्तां न सोमाद्यैर्दद्यादुहितरं पिता "

तथा पितृगेहे यस्या रजो दृष्टं तां विवाहयन् वृषलीपतिरित्यन्ये समानवर्णामसमानप्रवरां च । केचिदेतन्मन्त्रं पठन्ति ' समानवर्णां ब्राह्मणो ब्राह्मणीं क्षत्रियः क्षत्रिणीत्यादि । असमानप्रवरा नामसंख्याभ्यां सर्वे निषिध्यन्ते । प्रवराणां न नाम्नैव केवलेन संख्यया वा ततो भिन्ननामभिः समसंख्यैर्विवाह इष्यते । भिन्नसंख्येन समाननामभिश्च । एवं च व्याख्याने ऋक्षभरद्वाजैर्भरद्वाजविवाहो भवति नान्यथा भृग्वङ्गिरार्ष्टिषेणादिभिर्भृगूणाम् । नग्निकां श्रेष्ठां नग्नेव नग्निका स्वार्थे क प्रत्ययः । नग्निकामप्राप्तस्त्रीभावामयौवनरसामुपयच्छेतेति तथा श्रेष्ठां लावण्ययुक्तां स्त्रीलक्षणोपेतामित्यर्थः । नान्यल्लावण्याच्छ्रेष्ठत्वं कन्यायां विद्यते । अनेनैवाशयेन मनुनोक्तं ' स्त्रीरत्नं दुष्कुलादपि ' अव्यङ्गाङ्गीं सौम्यनाम्नीमित्यादि । अथवा नग्निकां श्रेष्ठां विवस्त्रवतीं श्रेष्ठां विवस्त्रा सती श्रेष्ठा या भवेत्तामुपयच्छेत । यस्मात्कुरूपाऽपि वस्त्राद्यलङ्कारकृता मनोहारिणी भवति । तस्माद्विवस्त्रा सती न सर्वा शोभते किं तर्हि काचिदेव लक्षणवती नापि च वैधव्यदौर्भाग्यादिदोषा दृश्यन्ते तस्माददृष्टं दूषणं दुर्ज्ञेयम् ॥ ८ ॥

तद्यथा विज्ञायते तद्दर्शयितुमाह–' **विज्ञानमस्याः कुर्यात्** ' । विज्ञायते येन शुभमशुभं च तद्विज्ञानं तदाह–अष्टौ लोष्ठानाहृत्य ॥ ९ ॥

---

१–५ ० घ. । २ सरलां, क. । ३ ना, ग. च. । ४ क्ता, ग. च. । ६–७ ० घ. । ८–९–० घ. । १–११ ० घ. ।

देवागारे स्थापयित्वाथ कन्यां ग्राहयेत् यदि श्मशानलोष्ठं गृह्णीयादध्वलोष्ठ मिरिणलोष्ठꣳ वा नो पयमेत् ॥ १० ॥ संजुष्टां धर्मेणोपयच्छेत ब्राह्मेण शौल्केन वा ॥ ११ ॥ शतमिति रथं दद्याद् गोमिथुनꣳ वा ॥ १२ ॥ इति सप्तमः खण्डः ॥ ७ ॥

---

देवागारे स्थापयेदि (यित्वे)त्यादि निगदव्याख्यातम् । अथ कन्यामष्टानां मध्यात्कन्ये एकं गृहाणेत्युक्त्वाऽन्यतमं ग्राहयेत् । यदि श्मशान-लोष्ठम् । एषां तु [१]चान्यतर(म)ग्रहणे चोपयमो नोपलभ्येत । यस्मादेषां स्मृत्य-न्तरे दोष उक्तः श्मशानात्पतिघ्नीत्वम् । अध्वनः प्रव्रज्या । इरिणे दुर्भगत्वं शेषाणाम् प्रशस्तत्वम् ॥ १० ॥

‘ संजुष्टां धर्मेणोपयच्छेत ब्राह्मेण शौल्केन वा ’ सम्यग् जुष्टा स्त्री तां ब्राह्मेण धर्मेण ब्राह्मो धर्मः कन्याया उदकपूर्व माहूय दानं शुल्कं यत्क-न्यायै वरो ददाति वरं तदुच्यते । तेन निवृत्तः शौल्को धर्मस्तेन शौल्केन वा संजुष्टां वा ग्रहण मुपलक्षणार्थं तेन ब्राह्मो दैवस्तथैवेत्यादि द्रष्टव्यम् ॥ ११ ॥

शुल्कनियमार्थमाह–‘ शतमितिरथं गोमिथुनं वा दद्यादिति विकल्पः ’ । कनकाद्यलङ्कारभक्तफलादीनि वा ॥ १२ ॥

॥ इति पूरणव्याख्याने सप्तमः खण्डः ॥



---

१ वा, ग. च. ।

## अष्टम: खण्ड:

पश्चादग्नेश्चत्वार्यासनान्युपकल्पयीत ॥१॥ तेषूपविशन्ति पुरस्तात्प्रत्यङ्मुखो दाता पश्चात्प्राङ्मुखः प्रतिग्रहीता दातुरुत्तरतः प्रत्यङ्मुखी कन्या दक्षिणत उदङ्मुखो मन्त्रकारः ॥२॥ तेषां मध्ये प्राक्तूलान्दर्भानास्तीर्य कांस्यमक्षतोदकेन पूरयित्वा अविधवास्मै प्रयच्छति ॥३॥ तत्र हिरण्यम् ॥४॥ अष्टौ मङ्गल्यान्यावेदयति ॥५॥

इदानीं ब्राह्मधर्ममाह—'पश्चादग्नेश्चत्वारि आसनान्युपकल्पयीत' वृषीकादीनां च पलाशशृङ्ग गोमयादि धर्म उपकल्पयते ॥ वक्ष्यमाणे उपवेशने कस्य पुनरग्नेः पश्चात्कन्याया जातकर्माद्यभावादग्निर्नास्ति नापि सर्वा काचित्प्रथमगर्भा कन्या येन सीमन्तारणी स्याता मेवं तर्ह्यरणिनिर्मथितेऽग्नौ भगार्यमादि यागेः स्यात्तस्याग्नेः पश्चात्। स हि लौकिकोऽप्य संकीर्णत्वान्मध्यतरस्तस्माद्वेद्यां विवाहहोमार्थं स्थापयिष्यमाणस्याग्नेः पश्चादासनकल्पनमिति निष्कर्षः ॥ १ ॥

तेषूपविशन्ति मन्त्रकारोयं प्राप्तः कन्यावरयितुर्दूर एव स इत्यर्थः प्रेष्यते स उच्यतेऽन्ये तु दधिहोमीत्याचक्षते ॥ २ ॥

तेषामुपविष्टानां मध्ये स्तरणं प्राक्तूली कुर्यात् दधिहोमी चेदुपविष्ट एव मध्यस्तरणं कुर्यादास्तीर्य कांस्यमक्षतोदकेन पूरयित्वा अविधवास्मै प्रयच्छति सैव पात्रं पूरयत्यक्षतैः सहितेनोदकेन या प्रयच्छति स्का प्रत्ययात्। अस्मै दात्रे प्रयच्छति प्राधान्यात्। पूरयित्वा मन्त्रकारोऽयं वान्तर्यात्[3] ॥ ३ ॥

तत्र हिरण्यमष्टौ मङ्गलान्यावेदयत्यादध्यात्। मङ्गलाय हितानि मङ्गल्यान्यावेदयन्तो मङ्गल्यान्युक्त्का को दाता प्रतिग्रहीता च कुतो ददाति प्रतिगृह्णाति तयोः समानकर्तृकत्वेनावगतत्वात्। यद्वा पिता भ्राता वा यत्संबन्धिनी तां दद्यादित्यनेनैकवाक्यत्वात् "त्रिर्ब्रह्मदेयेति वचनात्सकृत् शुल्कदेयेति गम्यते। अन्यथा ब्राह्मविशेषणमपार्थकं स्यात् ॥ ४ ॥ ५ ॥

१ यवान्ना, क. । यवन्ना, ग. च. । २ गे, ग. च. । ३—० घ. । ४ न्ति, क.। ति, घ. । ५ तत्र, ग. । ६—० घ. ।

**मङ्गल्यान्युक्त्वा ददामि प्रतीगृह्णामीति त्रिर्ब्रह्मदेया पिता भ्राता वा दद्यात् ॥ ६ ॥ सहिरण्यानञ्जलीनावपति धनाय त्वेति दाता पुत्रेभ्यस्त्वेति प्रतिग्रहीता तस्मै प्रत्यावपति ॥ ७ ॥ चतुर्व्यतिहृत्य ददाति ॥ ८ ॥ सावित्रेण कन्यां प्रतिगृह्य प्रजापतय इति च क इदं कस्मा अदादिति सर्वत्रानुषजति कामैतत्त इत्यन्तम् ॥ ९ ॥**

---

पिता भ्राता वा पितुरधिकारः । वा ग्रहण मन्यंमातामहादीनामुपलक्षणार्थं तथा च स्मृत्यन्तरम् । ( या. १-६३ )

**" पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः "**

अन्यस्त्वाह कथं स्मृत्यन्तरेणैकवाक्यता नाम । अयमियत्स्वयं स्मृतिकारेण नोक्तं चाप्रतिषिद्धं तत् स्मृत्यन्तराद् ग्राह्यमविरोधात् । यस्मान्नहि सर्वं सर्वत्राम्नातमत एव सर्वस्मृतिप्रत्ययेनैकं कर्म युक्तं तद्विजैः ॥ ६ ॥

अथ शुल्कदेयाधर्म माह—**सहिरण्यमञ्जली** नावपति धनाय त्वेति दाता पुत्रेभ्यस्त्वेति प्रतिग्रहीता तदेकमेव हिरण्यमष्टास्वप्यञ्जलिषु व्यतिहृत्येति वचनात्स एवाञ्जलिरुच्यते तथा न्योन्यस्याञ्जलि मावपेत् अत एव चतुर्व्यतिहृत्य ददातीत्युक्तं परस्परयोरपि ददातीत्यर्थः। दानं तु ददामि प्रतिगृह्णामीति पूर्वोक्तमेव सकृत् । तेन वाचनान्ते दद्यादीत्यर्थः । एवं च प्रतिग्रहणमुभयोरपि ॥ ७ ॥ ८ ॥

**सावित्रेण** प्रतिगृह्णाति देवस्य त्वेत्यारभ्य प्रजापतये त्वेति व्रीहियवं हस्तिनं पुरुषमित्युक्तत्वान्न वाच्यं शुल्कदानेऽपि यथा स्यादिति पुनर्वचनं साकाङ्क्षत्वार्थं च तयोः प्रतिग्राहितया किल न स्यादिति मन्दधीराशङ्केत कथमसौ वाचनिके प्रतिग्रहे तद्गुणमशङ्कमानः कः सुधीः स्यात् । एवं च नानुषङ्गनिवृत्त्यर्थं सावित्रग्रहणम् ॥ ९ ॥

---

१ न्यथा, ग. घ. च. । २-५ ० घ. । ३ ० ग. च. । ४ तः, ग. च. । ६ ० ग. घ. च. । ७ पते, ग. च. । ८-९ ० घ । १०-११ ० घ. ।

**समाना वा आकूतानीति सह जपन्त्यान्तादनुवाकस्य ॥ १० ॥ खे रथस्य खे नसः खे युगस्य शतक्रतो अपालामिन्द्रस्त्रिः पूर्त्यवकृणोत्सूर्यत्वच मिति तेनोदकाँस्येन कन्यामभिषिञ्चेत् ॥ ११ ॥ इति अष्टमः खण्डः ॥ ८ ॥**

---

**समाना वा आकूतानीति सह जपन्ति।** आन्तादनुवाकः स्यादिति नोक्तं नापितस्य ग्रहणमस्ति सह जपन्तीत्यन्यशाखा चेदधीत्य जपेत् ॥१०॥

तेनैवोदकांस्येनाभिषिञ्चति । उदकांस्येनेति पूर्व-पदार्थ-प्राधान्यं तत्पुरुषेऽपिवाक्यात्साक्षादुदकस्यैव साधकतमत्वात्कांस्यस्य तु तदधिकरणतया विशेषणत्वम् । यद्येवं कांस्योद( के )नेति पूर्व-पदार्थ-प्राधान्यं तत्पुरुषेऽपि स्यादभिषेचनं तन्मा भूदिति उदकांस्येनेत्युक्तं खे रथस्येत्येतयाभिषेचनम् ॥ ११ ॥

केचिदत्र खण्ड समाप्तिं कुर्वन्ति ॥ ८ ॥



# नवमः खण्डः

**षडर्घ्यार्हा भवन्त्यृत्विगाचार्यो विवाह्यो राजा स्नातकः प्रियश्चेति ॥ १ ॥ अप्राकरणिकान्वा परिसंवत्सरादर्हयन्ति ॥ २ ॥ प्राकरणिकाः कर्त्तारः सदस्याश्च वृताः ॥ ३ ॥**

इदानीं तस्यैव ब्राह्मशौल्कादेर्धर्मस्याङ्गभूतं मधुपर्कमाह—षडर्घ्यार्हा भवन्ति। षडृत्विगादयो [1]नान्ये विवाहप्रसङ्गेन तदङ्गऋत्विगादेरेव लाघवार्थं श्रूयत इत्याह। ऋत्विगा[2]चार्यस्तत्रर्त्विग्यागकर्त्तोच्यते । आचार्य उपनीयाध्यापयति। विवाह्यो जामाता। राजाऽभिषेकगुणयोगा[3]द्यं कुर्वन्ति। स्नातक एतेन धर्मेणेत्युक्तः । प्रियः सुहृच्छ्वशुरादिः। [4]आचार्यस्य विशिष्टस्याभिधानात्पृथगुपादानमृत्विगादेर्यागादिना न संबन्धः। अर्घ्यौ राजस्नातकौ त्वसंबन्धौ [5]तौ ॥ १ ॥

'**अप्राकरणिकान्वा**' आचार्यादयः पञ्चाप्राकरणिकास्ते चा[6]र्घ्यतमाः सन्तः पुनरागतानपरिसमाप्ते संवत्सरे नैवार्हयेत् । परिगते त्वागताननर्हयन् दोषभाजनः स्याद्विहितातिक्रमात् ॥ २ ॥

**प्राकरणिकाः कर्तारः**। सदस्याश्च वृता ऋत्विजः कर्त्तार इत्यर्थः। ननु दर्शपौर्णमासादौ प्रकरणत्वादर्हणं स्यात्। भवतु को दोषः। समर्थः करिष्यति स्वल्पमूल्यं वा कथंचित्। इतरथा त्वन्वाहार्यमात्रेण ऋत्विजः कथमर्हयेयुः। यद्वा पशुसौत्रामण्यादिषु प्रकरणेष्वेव कर्तृनर्हयेत्तेषु नित्येष्वपर्याप्तस्य प्रतिनिधिः संस्मर्यते। न तु तथा दर्शपौर्णमासादौ। अन्ये तु सोमेऽर्हणीयान्यत्रेति स्मृतिमुदाहृत्य व्यवतिष्ठन्ते। सदस्याश्च वृताः। चकारात्कर्तृसंज्ञका भँवन्ति। कर्तृत्वादर्हणीया इत्यर्थः। वृता इति आमन्त्रिताश्चेत् स्वयमागतानां तु सदार्हणेऽपि परिनियमः न तु स्नातकत्वात्सदार्हणं स्यात्। नह्यस्नातकः सदार्हः सत्यम[11]परिसंवत्सरान्तं सदस्य—व्रतग्रहणम् । अन्ये त्वस्यार्थं न बुध्यन्ते [12]तदा सत्वान्न प्रदर्श्यते[13] ॥ ३ ॥

१—२—० घ. । ३ द्यर्था, ग. च.। ४—५ ० घ,। ५ सन्तौ, ग. च.। ६ चार्घ्याः क घ। ७ न भ, क.। ८ ० घ.। ९ ० ग.। १० णः, घ.। ११ ० क.। १२—१३ ० घ.।

**न जीवत्पितृकोऽर्घ्यं प्रतिगृह्णियादितिश्रुतिरथवा प्रतिगृह्णियात् ॥ ४ ॥ अथैनमर्हयन्ति ॥ ५ ॥ कांस्ये चमसे वा दधि मधु चानीय वर्षीयसा पिधायाचमनीयप्रथमैः प्रतिपद्यन्ते ॥ ६ ॥ विराजो दोहोसि विराजो दोहमशीय मयि दोहः पद्यायै विराजः कल्पतामित्येकैक माह्रियमाणं प्रतीक्षते ॥ ७ ॥**

न जीव—श्रुतिग्रहणमादरार्थम् । प्रतिषेधनश्च विकल्पः । अथवेति न नियमः ॥ ४ ॥

अथेति प्रसक्तव्यपदेशार्थम् । एनमिति प्रकृतानुसरणार्थम् एवमेनं विवाह्य प्रकृतेर्गम्यते । अन्ये तस्मादर्हतीति केचित्पठन्ति विवाह्यमधिकृत्य जीवत्पितृकस्यापि कस्य विकल्पः । तत्र जीवत्पितृकोऽपि विवाह्योऽर्घं प्रतिगृह्णाति । यस्माद्विकल्पात्पक्षेऽधिकारस्तस्मात्कारणादर्हतीत्यर्थः । एतच्च पितुरनुमतेन ग्रहण मत एव श्रौतेन संग्रहणेन विकल्पोऽन्यथा श्रुतेर्बलीयस्त्वात्स्मृतेर्वाऽवश्यं सर्वत्र न पितुरनुमतेन मधुपर्कग्रहणेऽधिकारः ॥ ५ ॥

**कांस्ये चमसे वा दधि मधुचानीयवर्षीयसाऽपिधाय मधुपर्कं** कल्पयतीति शेषः। कांस्य परिमाणं वक्ष्यते पात्रस्यार्थगृहीतस्य नियमार्थं कांस्यचमसग्रहणं तेन[2] स्पन्द्या(न्द्या)द्यौ[3] न भवति। चमसा याज्ञिकेषु प्रसिद्धाः। नैषते प्रोधादि सोमपानपात्रं विकल्पश्च संभवापेक्षः । कामापेक्षं वा सोमपाय वावो[4] व्याकुर्यात् । ब्रह्मवर्चसकामस्य वा तथा च प्रणीताप्रणयने तत्कामस्य कांस्य उक्तः। दधि च मधु च ते आनीय मिश्रीकृत्य वर्षीयसा पात्रेण पिधानं कुर्यात् । अपि वा न पात्रेण नियमः । कथमर्हति आचमनीयप्रथमैः प्रतिपद्यन्तेऽर्हणीय मेवं चोपल्कृप्तिरेवात्र प्रतिपादनं नह्युपकल्पनादृते द्रव्याना(णा)मारम्भः संभवति । आचमनीयप्रथमानां क्रियमाणानामन्यपदार्थानामाचमनीयप्रथमेभ्योऽतिरिक्तानामभावात्तस्मादाचमनीयप्रथमैर्द्रव्यं न कर्मभिरिति ॥ ६ ॥

**विराजो दोहो** । एकैकमुदकादिक माह्रियमाणं दातुमुद्यतं प्रतीक्षते पश्यतीत्यर्थः ॥ ७ ॥

१—० क. । २—९—० घ. । ३—० ग. च. । ४—० क. । ९ नु, क. । ६—० क. । ७ म्य, क. । ८ म्य, च. । म, ग. । १० मं, घ. ।

सावित्रेण विष्टरं प्रतिगृह्य अहं वर्ष्म सदृशानामुद्यतामिव सूर्यः। इदं तमभितिष्ठामि यो मा कश्चाभिदासतीति जपति ॥८॥ राष्ट्रभृदसीत्याचार्य आसन्दीमनुमन्त्रयते ॥ ९ ॥ मा त्वा दोष इत्यधस्तात्पादयोर्विष्टरमुपकर्षति ॥ १० ॥ विष्टर आसीनायै कैकं त्रिः प्राह ॥ ११ ॥ नैव भो इत्याह नम आर्षेयायेति श्रुतिः स्पृशत्यर्घ्येम् ॥ १२ ॥ पाद्येन पादौ प्रक्षाल्य सावित्रेण मधुपर्कं प्रतिगृह्य प्रतिष्ठाप्यावसाय्य नमो रुद्राय पात्रसदे नमो रुद्राय पात्रसद इति प्रादेशेनाध्यधि प्रतिदिशं प्रदक्षिणं सर्वतोऽ-

---

सावित्रेण सावित्रग्रहणादन्यत्र पाद्याचमनीयादीनां तूष्णीं प्रतिग्रहणम्। अहं वर्ष्म जपेन्मन्त्रम् ॥ ८ ॥

राष्ट्रभृदसीति आचार्य आसन्दी मनुमन्त्रयते। अनेन मन्त्रेणासन्दीमासनार्थ मुपकल्पिता माचार्योनुमन्त्रयते । आसन्दीग्रहणमुपलक्षणार्थमाचार्यग्रहणं च तेन राज्ञे सिंहासनसदृशं प्रदीयते । अन्यस्तु एतत्सूत्रं केचिन्न पठन्ति। यदाहुः पठ्यते तदार्थप्राप्तत्वादासने स्थाता ( स्याताम्। घ.। स्थानायेति । ग. च. ) ॥ ९ ॥

आचमनीयविष्टरौ सकृद् ब्रूयात्त्रिरिति विष्टरासीनायेति वचनान्नैव भो इत्याह नम आर्षेयायेति च। नैव भो शब्देन च पाणिना संस्पृशति पश्चात्तद् गृह्णातीत्येव ॥ १०-११-१२ ॥

पाद्येन पादौ प्रक्षालयेत् पाद्येन पादप्रक्षालनं चात्र क्रियमाणं प्रग्रहीता दक्षिणमग्रे प्रक्षालयेत्। तथा च स्मृत्यन्तरम् (आ, गृ. १३,५)-"दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् सव्यं शूद्राय" इति सावित्रेणासमानकर्तृकाः क्रिया अवसाय्यौद्घाट्य अध्यधि पात्रस्योपरि सर्वतोऽभ्युद्दिशति आभिमुख्येन पुरस्तादारभ्य प्रदक्षिणं प्रादेशेन उध्र्वं दिशति मधुपर्क देवतायै मन्त्रवर्णात्। रुद्राख्यायै सृजति। उपरिष्टाच्च। अन्यस्तु ॐ नमो रुद्राय पात्रसद इति प्रतिष्ठापने च मन्त्रगुणभूतत्वाच्च मन्त्रस्यावृत्तिः। उद्देशनं तूष्णीं प्रतिदिशम् ॥ तथा च

---

१ त्पयि, ग. च. ।

भ्युद्दिशति ॥ १३ ॥ मधुवाता ऋतायत इति तिसृभिरङ्गुल्या प्रदक्षिणं प्रत्यृचं त्रिरायौति ॥ १४ ॥ अमृतोपस्तरणमसीत्युपस्तरति ॥ १५ ॥ सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति मधुपर्कं त्रिः प्राश्नाति ॥ १६ ॥ अमृतापिधानमसीत्याचामति ॥ १७ ॥ सुहृदेऽवशिष्टं प्रयच्छति ॥ १८ ॥ असि पाणिर्गौ प्राह ॥ १९ हतो मे पाप्मा पाप्मानं मे हत ॐ कुरुत इति प्रेष्यति ॥ २० ॥ चतुरो ब्राह्मणान्नानागोत्रान् भोजयते ॥ २१ ॥ पश्वङ्गं पायसं वा कारयेन्नामांसो मधुपर्क इति श्रुतिः ॥ २२ ॥

---

स्मृत्यन्तरे (आश्व. गृ. अ. १ २४ १४) नानादैवमन्त्रवर्णाद्वसवस्त्वा गायत्रेण छन्दसा भक्षयित्वादिभिमन्त्रैरिह तूष्णीं प्रतिदिशन्तीति विशेषः ॥ १३ ॥

मधुवाता ऋतायत इति आक्षालयति । अमृतो० सत्यम् । अमृतापिधा० । उपस्तरणमपोशानं प्राशनाचमने प्रसिद्धे । कर्मत्रयं त्रिभिः सूत्रैः समन्त्रक मुक्तम् ॥ १४-१५-१६-१७ ॥

सुहृदेऽवशिष्टं प्रयच्छेत् नैावश्यमवशेषयन् सुहृदसंनिधानेनावशेषणं स्यात्तदा सुहृत्प्रयुक्तं स्यात् । सुहृदवशिष्टं प्राश्नीयादिति वक्तव्ये प्रयच्छाति ग्रहणं सहैव पात्रेण प्रदानार्थम् ॥ १८ ॥

असि पाणिरिति । खड्गहस्तो गौरिति त्रिराहेत्यर्थः । हतो मे पाप्मा पाप्मानं मे हतों(तओं)कुरुतेति प्रैषो यदि कारयेत् ॥ १९-२० ॥

चत्वारो नानागोत्राश्चत्वारोऽन्ये । ब्राह्मणान् भोजयित्वान्य आशनीयः पञ्चमः सुहृत्वाच्चावशिष्टा युक्तम् ॥ २१ ॥

पश्वङ्ग-पश्वङ्गं छागस्य कारयेत् क्रीणापयेदित्यर्थः । तथा मनूक्तं(५-३२) क्रीत्वा स्वयं वेत्यादि । पायसं कारयेच्च क्षीरिकां रन्धयेद्वेति द्विविकासानूबन्ध्यापया(य)स्यावन्न प्रतिनिधिर्नामांसो यत एवंविधा श्रुतिरमांसो मधुपर्को न भवति ततो पश्वङ्गं ( पायसं ) वा कारयेदित्युक्तमित्यभिप्रायः ॥ २२ ॥

---

१-२-० ग. घ. । ३-४-० घ. । ९ स्यु, क. ग. च. । ९-६ ० घ. ।

यद्युत्सृजेन्माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः। प्रनुवोचं चिकितुषे जनाय मागा मनागा मदितिं वधिष्ट। भूर्भुवः स्वरोमुत्सृजतु तृणान्यत्तु ॥ २३ ॥ अथालंकरणमलंकरणमसि सर्वस्मा अलं मे भूयासम् ॥ २४ ॥ प्राणापानौ मे तर्पय समान व्यानौ मे तर्पय उदानरूपे मे तर्पय[२] सुचक्षा अहं मक्षिभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति यथालिङ्गमङ्गानि स९स्पृशति[३] ॥ २५ ॥ अथ गन्धोत्सादने[४] वाससी ॥ २६ ॥ परिधास्ये यशो धास्ये दीर्घायुत्वाय जरदष्टिरस्तु

शतं जीवेमशरदः पुरूची रायस्पोषमभिस९ व्ययिष्ये
यशसा माऽद्यावा पृथिवी यशसेन्द्रा बृहस्पती
यशो भगश्च मारिषद्यशो मा प्रति मुच्यताम्
इत्यहत९—वासः परिधत्ते ॥ २७ ॥

---

यद्युत्सृजेत्। यदि शब्दो भौतानुवादो मन्त्रवर्णान्मागामनागामदिति वधिष्टेत्यस्मात्। तेनाष्टकादावुत्सर्ग—सिद्धिः। अन्यस्त्वाह—नावेदविद् भुञ्जीतेति श्रुतिरिति तत्रोक्ता यदि गवा पशुना वा कुर्वीतेत्युक्तं तेन व्यवस्थितम्। किमुत्सर्गानुत्सर्गौ विकल्पितौ तौ च युगापेक्षया द्रष्टव्यौ ॥ २३ ॥

अलंकरण मसीत्यनेनालंकरणं प्रतिबध्नाति ॥ २४ ॥

प्राणापानौ मे तर्पयेति यथालिङ्गं गात्रस्पर्शम् ॥ २५ ॥

गन्धोत्सादने। गन्धश्चन्दनादि। उत्सादन मुद्वर्त्तनम् पक्वतैलादिना। केचिदुत्सादनं पूर्वमिच्छन्ति तेषामलंकरणेनापि पूर्वं स्यात्। अन्यस्तु गन्धाच्छादने गन्धो विज्ञेयः। आच्छादनं च परिधान मत एवाह अहतं वासः परिधत्त इति। तदुक्तं तस्य स्नानात्पूर्वं केचिन्मधुपर्कप्राशने कृते दानेऽधिकारः परिधानस्येत्यनेन परिधत्ते। एकवचनमतन्त्रं तेन द्वे वाससी भवतः ॥ २६—२७ ॥

---

१—२—० ख.। ( )क.ग.घ.। ३ मृ,क.घ.। ४ सा, ग.। ९ नेति,ग.च.।

**कुमार्याः प्रमदने भगमर्यमणं पूषणं त्वष्टारमिति यजति ॥ २८ ॥ प्राक्स्विष्टकृतश्चतस्रो अविधवा नन्दीरुपवादयन्ति ॥ २९ ॥ अभ्यन्तरे कौतुके देवपत्नीर्जयति ॥ ३० ॥ इति नवमः खण्डः ॥ ९ ॥**

कुमार्याः प्रमदने प्रमदनं क्रीडास्थानं यत्र क्रीडा यदा क्रीडा तदा निमित्त सप्तमी । अन्यस्त्वाह तेन क्रीडायाः प्राग्यागो वरणं पश्चाद्विज्ञेयम् । तथा च कृत्तिका-स्वाति-पूर्वैर्वरण मुक्तम् । लोके च वरणं दृश्यते तेन कः क्रमः पूर्वं वरणं ततो यागस्ततस्तैलाभ्यञ्जनादि । ततः पुण्ये लग्ने दानं विवाहे भगार्यमादयो देवाः प्रधानस्थाने याज्येन यजति ॥ २८ ॥

प्राक्स्विष्टकृतो नन्दीरिति वाद्यविशेषः । अङ्गसंयुक्तं गेयं वा अविधवा कारयेत् ॥ २९ ॥

अभ्यन्तरे कौतुकं वस्त्राद्यलंकृतस्थानं रहःस्थानं वा प्रधानस्थाने देवपत्नीभ्यः स्वाहेत्याहुतिः । सिनीवालीप्रभृतिकुह्वन्ता देवपत्नीर्यजतीत्यन्ये । अन्यस्तु राकादयो देवपत्न्यो ज्ञेयाः । अन्यस्तु कस्यास्मिन्यागेऽधिकारः । दातुरुत प्रतिग्रहीतुः । तत्र न प्रतिग्रहीतुरधिकारः कुतः । वधूसंस्कारार्थं तावत् कर्म यथा वैश्वानरेष्टिः पुत्रे जाते एवं चेद्यथा पुत्रसंस्कार इष्टिर्जातकादि च यथा पिता करोति तथाऽयं यागो विवाहश्च वक्ष्यमाणो वधूसंस्काराय पिता कुर्यात् । यथापि पुत्रस्यानुपयोच्यमाणस्य दृष्टादृष्टकालसाधकस्य गत इष्ट्यादि संस्कारस्य कर्तुर्यागादियोगे पाणिग्रहणादिदं यदि तु नानुतिष्ठन्ति केचिदिष्टिरयं च यागस्तत् किं कुर्मः कमुपलभेमहि शास्त्रार्थस्तावद्वर्णितोऽस्माभिरित्यलमतिप्रसङ्गेन ॥ ३० ॥

॥ इति पूरणव्याख्याने नवमः खण्डः ॥

---

१ यजति, क. घ. । २ नार्थं, ग. च. । ३ गम, क. ग. च. । ४ वाः, घ. । ५-६-७ घ. ।

# दशमः खण्डः



प्रागुदक्प्रवं लक्षणमुद्धृत्यावोक्ष्य स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरस्रं वा अग्निं निर्मथ्याभिमुखं प्रणयेत् तत्र ब्रह्मोपवेशनम् ॥ १ ॥

---

प्रागुद...प्रणयेत् प्राच्यः पञ्च यत्र लेखा उदीची चैका तत्प्रागुदक्प्रवलक्षणं कर्तव्यं स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरस्रं वा स्थण्डिलमाहार्य मृदा कार्यम् । अन्यस्तु वेदेरुपलक्षणार्थं तथा चोक्तं षडङ्गुला इत्यादौ तेन वर्तुलं स्थण्डिलं ज्ञेयम् । गोमयग्रहणं केवलमृत्तिकानिवृत्त्यर्थं माहिषनिवृत्त्यर्थं च । किमाकारं लिम्पेत् स्थण्डिलमित्याह—मण्डलं चतुरस्रं चतुःकोणं तुल्यो विकल्पः । अग्निं मथित्वाऽऽत्मनोऽभिमुखं प्रणयनम् । प्राङ्मुखस्य संभवान् न प्रत्यङ्मुखस्य वचनात् । इह मन्थनदर्शनान्नावश्यं जन्माग्निर्वार्यत इति गम्यते । पुत्रे जाते वरं ददात्यरणिभ्यामग्निमुपक्रम्य तस्मिन्भार्यामुद्वहेदिति पाक्षिकम् पारिशेषिकत्वम् । अपरे तु मथित्वेति वक्तव्ये निर्मथ्यग्रहणमाहिताग्नेः पुनर्विवाहे निर्मथ्याग्निं प्रणयेत् । निर्मथ्यसंज्ञानार्थत्वान्निर्मथ्यग्रहणस्य । तदसत् । मथित्वा निर्मथ्यशब्दयोर्गुरुलाघवकृतविशेषाभावात्समानार्थतैव । [१]प्रत्युत निर्मथ्यशब्दो मथित्वाशब्दाल्लघीयान्नचाहिताग्नेः पुनर्विवाहेऽधिकारोऽस्ति । अधर्मवोर्द्व-(अधर्मोवोर्ध्वं)माधानात्तत्कर्मसमवायाभि(?)कर्मभिरवचनात्तथा च स्मृतिः-धर्म प्रजापन्नेदारे नान्यां कुर्वीतान्यतरापाये अग्न्याधेयादिति । न च निर्मथ्यग्रहणं संज्ञानार्थं माहिताग्नेर्विवाहस्या(स्य)शालाग्निकरणे अग्निं निर्मथ्येत्यत्रापि प्रसङ्गात्तश्चाहिताग्नेरेवशालाग्निकरणस्या निर्मथ्यशब्दात्तत्राग्निहोत्रारणिभ्यां निर्मथ्यास्मान्न कर्माधिकारः । तेन च यूपाहुतिदर्शनमुपपन्नं स्मार्तकर्मणः । यूपाहुतौ श्रौतत्वात् । आहवनीयेऽपि च प्रसङ्गात् । अपि च निर्मथ्याहवनीययोर्दीक्षितस्यैव सतो विकल्पितत्वात् । यूपाहुतिदर्शनात् । न दीक्षितस्यैव निर्मथ्य विकल्पो नाग्निहो[३]त्रिमात्रस्य । न हि दीक्षितस्याग्नौ जुव्हतीति वचनात्[२] ॥१॥

---

१—४—० घ. । २ बोध्यवाध, क. । ३—० ग. घ. ।

दर्भाणां पवित्रे मन्त्रवदुत्पाद्येमँ स्तोम मर्हत इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य पश्चादग्नेरेकवद्बर्हिःस्तृणाति ॥ २ ॥ उदक्प्राक्तूलान्दर्भान्प्रकृष्य दक्षिणांस्तथोत्तरानग्रेणाग्निं दक्षिणैरुत्तरानवस्तृणाति ॥ ३ ॥ दक्षिणतोऽग्नेर्ब्रह्मणे सँस्तृणात्यपरँ यजमानाय पश्चार्द्धे पत्न्यै अपरमपरँ शाखोदकधारयोर्लाजा धार्याश्च पश्चाद्युगधारस्य च ॥ ४ ॥ स्योना पृथिवि भवेत्येतयावस्थाप्य शमीमयीः शम्याः कृत्वान्तर्गोष्ठेऽग्निमुपसमाधाय भर्त्ता भार्यामभ्युदानयति ॥ ५ ॥ वाससोन्ते गृहीत्वा—

---

दर्भाणां बर्हिस्तृणाति निगदसिद्धम् ॥ २-३ ॥

दक्षिणतोऽस्यैदर्भमूलकमित्यर्थः । अपरं यजमानाय पश्चाद्दक्षिणतोऽग्नेरेव पश्चार्द्धे षष्ठयन्ताग्निशब्दानुवृत्तेर्दक्षिणतोऽग्नेरित्यनुवर्त्य दक्षिणतः पश्चादपरमिति संबन्धनीयम् । अन्यस्तु एते सूत्रे स्तः शाखोदकधारयोर्ब्रह्मयजमानपत्नीनां दक्षिणतः शाखोदकधारयोरपरमपरं स्तृणाति शाखाबहुपदेत्यादि गुणे कस्याधारणमात्रमुदकुम्भमार्जनार्थं च लाजाधार्याश्च लाजा धारयतीति लाजाधारी स्त्री अविधवा च तौ पश्चाद्युगधारस्य च युगं धारयतीति युगधारः । लाजाधारीग्रहणं पाक्षिकम् । यदैतस्मिन्नेव तन्त्रे लाजाः स्युस्तदा संस्तृणीयात् ॥ ४ ॥

स्योना पृथिवी । अनया अवस्थापनं सर्वेषां शाखादि—धारिणां युगधारस्य चानन्तर्यात् । अवस्थापनं प्राङ्मुखोऽवतिष्ठत इति प्रयोगदर्शनात् । शमीमयी वेतुः(?) पदमिति । यदि प्रथमकृता शमीमयी(ः)शम्याः स्युर्नान्याः कारयेत् । अन्तरगोष्ठग्रहणमन्तर्गोष्ठ एवोद्वाहो यथा स्यात् । उपसमाधानं कृत्वेत्यर्थः । भर्तृग्रहणं विस्पष्टार्थं भार्यासंबन्धिलब्धत्वात्पूर्वक्रिययोर्वाध्वर्युकर्तृकत्वार्थम् ॥ ५ ॥

अभिपरिगृह्य बाहुभ्यामिति अभ्युदानयेदुत्तरेण रथं वाऽनो वा अनः शकटम् । तुल्यो विकल्पः । उत्तरेण देशेन तयोर्गत्वेत्यर्थः । अन्तरेण मध्येन

---

१ वी, क. ग. च. । २-३-० घ. । ४ तौ, ग. च. । ५ वा, क. ग. च. । ६ कथं, ग. च. । ७ त, ग. च. । ८-९-० घ. ।

' अघोर चक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः
वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे '

इत्यभिपरिगृह्याभ्युदानयति ।। ६ ।। उत्तरेण रथꣳ वाऽनो वानुपरिक्रम्यान्तरेण ज्वलनवहनावतिक्रम्य दक्षिणस्यां धुर्युत्तरस्य युगतन्मनोऽधस्तात्कन्यामवस्थाप्य शम्यामुत्कृष्य हिरण्यमन्तर्धाय हिरण्यवर्णाः शुचय इति तिसृभिरद्भिरभिषिच्य अत्रैव बाणशब्दं कुरुतेति प्रेष्यति ।।७।। अथास्यै वासः प्रयच्छति-

या अकृन्तन्या अतन्वन्या आवन्या अवाहरन्
याश्चाग्नादेव्योऽन्तानभितोऽततनन्त ।
तास्त्वादेव्यो जरसे सꣳव्ययन्त्वायुष्मतीदं परिधत्स्व

वासः-इत्यहतꣳ वासः परिधाप्यान्वारभ्याघारावाज्यभागौ हुत्वा अग्नये जनविदे स्वाहेत्युत्तरार्धे जुहोति सोमाय जनविदे स्वाहेति दक्षिणार्द्धे गन्धर्वाय जनविदे स्वाहेति मध्ये ।। ८ ।।

---

ज्वलनवहनावग्निशकटौ अतिक्रम्य दक्षिणामुखं गत्वेत्यर्थः । दक्षि । द्वयोस्तन्मध्यं धूरुच्यते द्वे च धुरौ भवतो युगस्य तयोर्दक्षिणा या धूस्तस्या उत्तरं यत्तन्मच्छिद्रं शम्याप्रवेशेन न तस्याधस्तात्कन्यामवस्थाप्यावस्थान मुक्तम् । उत्कृष्यशम्यां तन्मनः सकाशाद्धिरण्यमन्तर्धाय हिरण्यवर्णा इत्यादिभिरभिषिञ्चेत् कन्यामित्यर्थः । तिसृभिरेकाभिषेकः प्रत्यृचं वा । अत्रैव बाण अत्रैवावसरे इत्यर्थः । बाणो वाद्यविशेषः शङ्खादिः ।। ६-७ ।।

अथास्यै वाससोन्ते गृहीत्वेत्युक्तमिदमन्यद्वासोन्तरं भर्ता प्रयच्छति या अकृतन्नित्यनेनमन्त्रेणाहतं वासः । भर्त्ता भार्येतिक्त्वाप्रत्ययो भर्त्तैव कर्त्ता गम्यते । अग्निर्मह्यमथो इमामिति च मन्त्रवर्णात् । आघाराज्यभागा उत्तरत्र वक्ष्यति । इध्मादि सर्वं तत एवावगन्तव्यम् । अग्नये जनविदे स्वाहेतित्युत्तरस्यां दिशि जुहुयात् । तथा सोमायेति दक्षिणायां गन्धर्वायेति मध्ये ।। ८ ।।

---

१ न्मनोमध्यं, ग. । २-० ग. च. ।

युक्तो वह यदाकूतमिति द्वाभ्यामग्निꣳयोजयित्वा नक्षत्रमिष्ट्वा नक्षत्रदेवताꣳयजेत्तिथिं तिथिदेवतामृतुमृतुदेवतां च ॥ ९ ॥

सोमोददद्गन्धर्वाय गन्धर्वो दददग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्
अग्निरस्याः प्रथमो जातवेदाः
सोऽस्याः प्रजा मुञ्चतु मृत्युपाशात् ।
तदिदं राजा वरुणोऽनुमन्यताम् ।
यथेद्रꣳस्त्रीपौत्रमगन्म रुद्रियाय स्वाहा—

इति हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचमाज्याहुतीर्जुहुयात् ॥१०॥येन च कर्मणेच्छेत्तत्र च जयान् जुहुयात् जयानां च श्रुतिस्ताꣳयथोक्ताम् । आकूत्यै त्वा स्वाहा, भूत्यै त्वा स्वाहा, प्रयुजे त्वा स्वाहा, नभसे त्वा स्वाहा, अर्यम्णे त्वा स्वाहा, समृध्यै त्वा स्वाहा, जयायै त्वा स्वाहा, कामाय त्वा स्वाहेत्यृचा स्तोमं

---

'युक्तो वह' युक्तो वह जातवेद इति द्वे प्रकरण ऋचत्वात् । यथा प्राङासीनोन्तरेण जानुनी आघाराज्यभागा वित्यत्रान्तराजानुत्वं प्राङासीनता च प्रकरणार्था एवं मन्त्रारम्भः । युक्तो वह निगद व्याख्यातम् । सोमो दद् द्वाभ्यामृग्भ्या मेकाहुतिरन्ते स्वाहाकारात् ॥ ९ ॥

हिरण्य निगदव्याख्यातम् ॥ १० ॥

येन च—येन कर्मणाऽर्थसिद्धिमिच्छति तत्र जयान् जुहोति । सर्वत्रानेन वाक्येन जयानां विधानम् । जयानां यथोक्तग्रहणादाकूताय स्वाहेति दर्शयति नत्वाकूतं च स्वाहेति यथा शाखान्तरेषु । अथवा जयानां श्रुतिरित्यनेनेति तदाह—भ्रातृव्यवानपि जुहुयादित्यर्थः । आकूत्यै त्वा बृहद्गायत्रवर्तनिः स्वाहेति श्रुतिः । एभिर्मन्त्रैरवरा आहुतीर्जुहुयादित्यर्थः । प्रजापतये स्वाहेति

---

१–२ ० घ. । ३ सान्ततेषु—क. ।

प्रजापतय इति च ॥११॥ शुचिः प्रत्यङ्ङुपयन्ता ताꣳसमीक्षस्वे-
त्याह ॥ १२ ॥ तस्याꣳ समीक्षमाणायां जपति—

मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं तेऽस्तु
मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्—

इति ॥१३॥ का नामासीत्याह ॥१४॥ नामधेये प्रोक्ते देवस्य
त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳहस्तं गृह्णाम्य-
साविति हस्तं गृह्णन्नाम गृह्णाति । प्राङ्मुख्याः प्रत्यङ्मुख ऊर्ध्व-
स्तिष्ठन्नासीनाया दक्षिणं मुत्तानं दक्षिणेन नीचारिक्तं मरिक्तेन—

यथेन्द्रोहस्तमग्रहीत् सविता वरुणो भगः ।
गृभ्णामि ते सौ भगत्वाय हस्तं मया पत्या जरदष्टिर्यथा सत् ॥
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ।

---

चतुर्थ्यन्तेन प्रजापतिशब्देन जुहुयात् । प्रजापतिरिति पाठे प्रजापते नहीत्य-
नया ऋचा स्वाहाकारान्तया ॥ ११ ॥

शुचिः पुरस्तात्प्रत्यङ्ङुपयन्ता तां समीक्षस्वेत्याह । उपयन्ता पुरस्तात्क-
न्यायाः शुचिर्मनसो वैकार्यान् ममेयं कामोपभोगाय स्यादित्यतः प्रजापत्या-
हुतेर्मनसो अस्मिन्नवसरे चित्तस्खलनादशुचिः स्यादिति शुचि रित्युक्तम् ।
तथा यतेत यथा मनो न स्खलेदित्यर्थः । ब्रह्मचर्यात्कान्तासन्निधौ स्यादि-
न्द्रियात्मता तस्मात् शुचित्ववचनं युक्तम् । प्रत्यङ्मुखः समीक्षस्व मामिति
ब्रूयात्ताम् । एतस्यां तस्यां पश्यन्त्यां मम व्रते इति ॥ १३ ॥

का नामासीति नामधेयं पृच्छति । विवृत्तेऽपि नामधेये पुनः प्रश्नोऽ
प्रधाननामधेयार्थानां नामधेये हस्तं गृह्णन्नाम गृह्णाति । प्रोक्ते नामधेये
देवस्य चेति हस्तं गृह्णाति । हस्तं गृह्णन्नाम गृह्णाति । असौ इति संबुध्यन्तं-
प्रयोगात् । युष्मदः कथमित्याह । प्राङ्मुखस्यातिरिक्तेन निगदसिद्धम् ।

---

१ सा. ग. च. । २-३ ० घ. । ४-५ ० घ. । ६-७ ० घ. । ८ खा.
क. । स्या अरिक्तेन घ. ।

याग्रे वाक् समवदत पुरा देवासुरेभ्यः ।
तामद्य गाथां गास्यामो या स्त्रीणामुत्तमं मनः ।
सरस्वति प्रेदमव सुभगे वाजिनीवति
यां त्वा विश्वस्य भूतस्य भव्यस्य प्रगायाम्यस्याग्रतः ।
अमोह मस्मि सा त्वं सा त्वमस्याप्यमोहम् ॥
द्यौ रहं पृथिवी त्वमृक् त्वमसि सामाऽहम्
रेतोह मस्मि रेतो धत्तम् ॥
ता एव विवहावहै पुंसे पुत्राय कर्त्तवै ।
श्रीये पुत्राय वेधवै ॥ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥
इति ॥ १५ ॥ अभिदक्षिणमानीयाग्नेः पश्चात्—
एतमश्मानमातिष्ठतमश्मेव युवां स्थिरौ भवतम्
कृण्वन्तु विश्वे देवा आयुर्वां शरदः शतम् ।
इति दक्षिणाभ्यां पभ्द्यामश्मानमास्थापयति ॥ १६ ॥
यथेन्द्रः सहेन्द्राण्या अवारुहद् गन्धमादनात् ।
एवं त्वमस्मादश्मनो अवरोह सह पत्न्या ॥

---

यथेन्द्रो हस्तमित्यादि सुप्रजास्त्वायेत्यन्तं मन्त्रगणं जपतीति संबन्धः ॥ १४ ॥ १५ ॥

अभिदक्षि अग्नेः पश्चादात्मनो दक्षिण मेता मानीयेति । अथ कर्त्तृकाः पुनः । अन्यस्तु केचिदश्मानमग्नेः प्रदक्षिणमानीयाग्नेरेव .पश्चात्स्थापयति । एतमश्मानमनेन मन्त्रेण दक्षिणाभ्यां पद्भ्यां दम्पती अश्मान मास्थापयति । अश्मानमुपरिस्थापयन्तीत्यर्थः । अर्थाद्दम्पत्योरेव पादौ । अन्यस्तु (१) केचिद् द्विवचनमास्थापयत इति पठन्ति । तच्चदम्पत्योर्विवक्षायां ज्ञेयम् । तदा चाक्रामत इत्यर्थः ॥ १६ ॥

---

१—० क. ख. ग. च. ।

**आरोहस्व समे पादौ प्र पूर्व्यायुष्मती कन्ये पुत्रवती भव।**

**इत्येवं द्विरास्थापयति ॥ १७ ॥ चतुः परिणायति ॥ १८ ॥ समितं संकल्पेथामिति पर्याये पर्याये ब्रह्मा ब्रह्मजपं जपेत् ॥ १९ ॥**

**इति दशमः खण्डः ॥ १० ॥**

---

यथेन्द्रः सहेन्द्राः—दम्पत्योरेव मन्त्रवर्णादवरोपयति द्विरास्थापयति तेन च मन्त्रेण । अवरोपयति चोत्तरेण ॥ १७ ॥

चतुः परिणयति अग्निं पर्यन्तीत्यर्थः । एतच्च परिणयनं लाजहोमेषु चतुर्षु पुरासमाचारात् ॥ १८ ॥

समितं संकल्पेथामिति पर्याये पर्याये ब्रह्मा ब्रह्मजपं जपेत्। पर्याये पर्याये परिणयने परिणयने इत्यर्थः । एतस्मात्पूर्वं स्विष्टकृदन्ते सशाखमादधातीति केचित्पठन्ति । तस्यार्थे लाजहोमान्ते सकृत्स्विष्टकृद्भवतीत्यन्य आह ॥ १९ ॥

॥ इति पूरणव्याख्याने दशमः खण्डः ॥



# एकादशः खण्डः

ततो यथार्थं कर्मसन्निपातो विज्ञेयः ॥ १ ॥

उक्तं च लाजा धार्या आसनं लाजहोमान्ते सकृत् स्विष्टकृल्लाजहोमपत्त एतस्मिन्नेवावसरेऽस्मात्स्थापनानन्तरं लाजहोमः । स्यादिति वचनं क्रमार्थं ततो यथार्थं कर्मसन्निपातो विज्ञेयः । तत इति विप्सायामन्यत्राप्युद्वाहादयं प्रवर्तत इति ततस्ततो यथार्थं यस्य कर्मणो यत्रार्थः प्रयोजनं तस्य तत्र सन्निपातोऽनुष्ठानं वेदितव्यम् । यथा लाजाधार्यै चासनमेकतन्त्रेऽग्निप्रकटनानन्तर द्विरास्थापनान्ते लाजनिर्वपणं तथार्यम्णोऽग्नये इत्यत्र निर्वपणलिङ्गाद् द्विरास्थापनानन्तरं लाजनिर्वपणं तन्त्रद्वयं चैं लक्ष्यते । तत्र द्वितीये तन्त्रे लाजाधार्यासनं प्रयोजनमतश्च पूर्वं तन्त्रं द्विरास्थापनान्तं परिसमाप्य पूर्णपात्रं दत्वा लाजनिर्वपणादि द्वितीयं तन्त्रं प्रारभेत । अन्यस्तु नायमर्थो न्याय्यमि(इ)ति । तथा चालूनविशीर्णमिवं प्रतिभाति । यत एक तन्त्रत्वमुक्त्का पृथक् तन्त्रत्वमुक्तम् । तस्मादयमर्थो न्याय्य इति ब्रूमः । ततो यथार्थमिति अर्थमर्थ प्रति यथार्थं कर्मणां सन्निपातो विज्ञेयो बोद्धव्यो यथा संस्तरकाले लाजाधार्याः संस्तरणं तथाज्यनिर्वापकाले लाजनिर्वपणं तथा पात्राणां स्रुक्स्रुवादीनां प्रयोगकाले शूर्पाञ्जनेषीकादीनां प्रयोगः । एवं प्रकारः कर्मणां सन्निपातो विज्ञेयो ज्ञातव्यः । यदप्यश्मास्थापनान्तं समाप्य पूर्णपात्रं तु ब्रूयात् । लाजानिर्वपणादिना द्वितीयं तन्त्रं तदप्ययुक्तम् । यस्मात्पूर्वकर्मणोत्र समाप्यते न च तत्र दक्षिणा किं तर्हि वक्ष्यति वरो दक्षिणेति तस्मादुभे एते कर्मणी समान तन्त्रे आज्यहोमे लाजाहोमश्च । तथा च पूर्वतन्त्रं प्रागाज्यहोमानुक्रमपरं हि लाजहोमादनन्तरम् । अन्यच्च अथैनान्युपकल्पयतीत्युपक्रम्य शूर्पं लाजा इषीका मश्मान मञ्जनमिति शूर्पादिभिः सहाश्मन उपकल्पनमुक्तम् । तदेक तन्त्रत्व उपपद्यते न भिन्नतन्त्रत्वे तस्मात्पूर्वापरमभिसमीक्ष्यैकतन्त्रत्वमाचार्यस्याभिप्रेतम् । बहुस (श) इति मन्याम(हे)तेनं तत्र पूर्णपात्रस्य प्रकृतिवत्प्राप्तिरेव तेनं

१—श्मा घ, । २ :, ग. च. । ३ प्रणय, ग. घ. च. । ४ न, ग. च. । ५ य, क. ग. च. । ६ ति, क. । ७—१२—० घ. । ८ क, क. । ९—१०—० क. । ११ चा, ग. च. ।

अर्यम्णोऽग्नये पूष्णोऽग्नये वरुणाय च व्रीहीन् यवान्वाऽभिनिरूप्य प्रोक्ष्य लाजा भृज्जति ॥ २ ॥ मात्रे प्रयच्छति स जाताया अविधवायै ॥ ३ ॥ अथास्यै द्वितीयं वासः प्रयच्छति तेनैव मन्त्रेण ॥ ४ ॥ दर्भरज्वा इन्द्राण्याः संनहनमित्यन्तौ समायम्य पुमाꣳसं ग्रन्थिं बध्नाति ॥ ५ ॥

सं त्वा नह्यामि पयसा पृथिव्याः संत्वा नह्याम्यद्भिरोषधीभिः ।
सं त्वा नह्यामि प्रजया धनेन सा सन्नद्धा सुनुहि भागधेयम् ।

इत्यन्तरतो वस्त्रस्य योकृत्रेण कन्यां संनह्यते ॥ ६ ॥

---

स्थालीपाकेष्वतिदेशाद् अत्रापि प्रकृतिवत्प्राप्तिस्तथापि प्रत्यक्ष–शिष्टयावरया साध्यते तस्मादलं बहुनोक्तेन प्रकृतमभिधीयते[२] ॥ १ ॥

अर्यम्णे अग्नये ऽर्यमादिदेवताभ्यः प्रतिपदमग्नये इत्यनुषजेत्[३] एतस्यां सामगायेतिवत् । व्रीहीन् यवान्वेति तुल्यो विकल्पः । प्रोक्ष्य लाजा भृज्जतीति लाजाग्रहणमुपलक्षणं धानानां पक्षे यवानां प्रकृतत्वात् ॥ २ ॥

मात्रे प्रयच्छति कन्यामात्रे तस्या गृहे विवाहदर्शनात् । सजातायै मात्रे अविधवाया अपि प्रयच्छेत् । अन्यस्तु मातुरविधवायै सजातायै अन्यस्यै वा अविधवायै यथा यदि सोमं न विन्देत्पूतिकामभिषुणुयादिति यस्मादन्यस्यै अविधवायै न मात्रे विधवायै प्रयच्छेत् ॥ ३ ॥

अथास्यै द्वितीयं वासः प्रयच्छति तेनैव मन्त्रेण लाजप्रदाना[४]नन्तरमिदं द्वितीयवस्त्रदानं कन्याया उक्तं तेन मन्त्रेण ॥ ४ ॥

दर्भरज्वा इन्द्राण्याः सनहनमिति मन्त्रेण दर्भरज्वा अन्तौ प्रान्ते एकीकृत्य ग्रन्थिं बध्नात्याचार्यः ॥ ५ ॥

सं त्वा नह्यामि मन्त्रेण योक्त्रेण कन्यां संनह्यते वस्त्रस्य मध्ये वस्त्रसंप्रदाने दर्भरज्वा संनहनम् ॥ ६ ॥

---

१–२–० घ. । ३ पद्यते, ग. च. । ४ धा, क. । ५ न्द्राण्याः संनहनमिति सन्नह्येत रसनावर्जनमाज्यनिर्वपणकाले लाजानिर्वपणं कार्यं पश्चाद्भृज्यमानासु पर्यग्निकरणं संप्रदाने दर्भरज्वा संनहनम् इति ग. च. पाठः ।

अथैनान्युपकल्पयते शूर्पं लाजा इषीका अश्मान माञ्जनम् ॥ ७ ॥ चतसृभिर्दर्भेषीकाभिः शरेषीकाभिर्वा समुञ्जाभिः सतूलाभिरित्येकैकया त्रैककुभस्याञ्जनस्य संनिकृष्य वृत्रस्यासि कनीनिकेति भर्त्तुर्दक्षिणमक्षि त्रिः प्रथम माङ्क्ते तथा परं तथा पत्न्याः शेषेण तूष्णीम् ॥ ८ ॥ दिशि शलाकाः प्रविध्यति यानि रक्षाꣳस्यभितो व्रजन्त्यस्या वध्वा अग्निसकाश मागच्छन्त्याः तेषामहं प्रतिविध्यामि चक्षुः स्वस्ति वध्वै भूतपतिर्दधातु ॥ इति ॥ ६ ॥

लाजाः पश्चादग्नेरुपसाद्य शमीपर्णैः सꣳयुज्य शूर्पे समं चतु-

'शूर्पादीनामुपकल्पनम्' शूर्पलाजोदेरिषीकास्तरणपर्यन्तस्य न आज्यावेक्षणमधिश्रृत्योपाधिश्रृत्य पश्चात् सादनमुत्पवनं यजमानावेक्षणं पश्चादग्नेर्लाजावसादनं शमीपत्रैः संसर्जनं चतुर्धाविभजनमग्रेण पर्याहरणं लाजाधार्यै प्रधानमिध्माधान मन्वारभ्याज्यभागादि प्रधानस्थाने लाजाहोमः । अन्यस्तु भिन्नतन्त्रै एतदुक्तं च तत्कथं तस्मादयं मन्त्र क्रमः प्रथमं लक्षणं कृत्वाऽग्निप्रणयनं ततो दर्भपवित्रकरणं ततः परिसमूहनादिस्तरणान्तं ब्रह्मसंस्तरणादि तस्मिन्नेवकाले लाजाधार्यास्तरणं ततस्तेषामवस्थापनं ततः स्रुक्स्रुवादि पात्रप्रयोगस्ततो लाजानिर्वपण प्रोक्षण भर्जनादयस्ततः शूर्पादीनामुपकल्पनं तत आज्यग्रहणादि समिदाधानान्तं ततोऽन्वारभ्याघाराज्यभागहोमादि अग्नाचास्तोममित्यन्तं ततः शुचिरित्यादि हस्तग्रहणान्तं ततोऽश्मास्थापनं तच्च द्विः पुरस्ताल्लाजाहोमादुपरिष्टाच्च द्विरिति वचनात् ततो द्वितीयवासःप्रदानं तेनैव मन्त्रेण दर्भरज्वेन्द्राण्याः संहननं दर्भग्रहणं मुञ्जादि-निवृत्यर्थं ततः । आञ्जनादिषीकापर्यसनान्तं ततो लाजाः पश्चादग्नेरुपसादनम् । एकोन (?) अर्थमुपकल्पनमुत्तरतोऽग्ने रुपसादनम् । ततोऽग्रेणाग्निं पर्याहृत्य लाजाधार्यै प्रदानं ततो लाजाहोमोऽर्यमादीनां तिसृणां देवतानां यतः कामेन चतुर्थं स्विष्टकृतमिति वक्ष्यति निर्वपणं तिसृणामुक्तं ततोऽभ्यातानादि होम स्ततः कामाय स्विष्टकृतं चतुः परिणयनं च चतुरिति वचनात् परिणीय

१ अञ्जनादि इषी, ग. च. । २ र्णैः, ग. च. । ३ कं, ग. च. । ४ जयादितानाहि, ग. च. ।

र्गो विभज्याग्रेणाग्निं पर्याहृत्य लाजाधार्यै प्रयच्छति ॥१०॥ लाजा भ्राता ब्रह्मचारी वाञ्जलिनाञ्जल्योरावपति ॥११॥ उपस्तरणाभिघारणैः संपातं ता अविच्छिन्नैर्जुहुतः ।

अर्यमणं नु देवं कन्या अग्निमयक्षत
सोऽस्मान्देवोऽर्यमा प्रेतो मुञ्चातु मामुतः स्वाहा ॥
तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतुना सह ।
पुनः पतिभ्यो जायां दा अग्ने: प्रजया सह ॥
पुनः पत्नी मग्निरदादायुषा सह वर्चसा ।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥
इयं नार्युपब्रूतेऽग्नौलाजानावपन्तिका ।
दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो ममेति ॥ १२ ॥

एवं पूषणं नु देवं वरुणं नु देवम् ॥ १३ ॥ येन द्यौ रुग्रेत्यादय उद्वाहे होमा जयाभ्यातानाः संततिहोमा राष्ट्रभृतश्च ॥ १४ ॥

परिणीय लाजहोमः परिणयने परिणयने च ब्रह्मजपः । अत्र च हस्तग्रहणादूर्ध्वं यत्कर्म तत्स्वयं कर्तृत्वे ब्रह्मा कुर्यात् ततः स्विष्टकृतादूर्ध्वं वरदानान्तं कर्मसमापनम् । एवं विधश्च क्रमस्ततो यथार्थं कर्म सन्निपातो विज्ञेय इत्येतस्मात्सूत्राद्बोद्धव्यम् इत्यष्टावक्र उपस्तरो बहुवचनानामपि । ७-८-९-१०

ब्रह्मचारी अब्रह्मचार्यपि भ्राताञ्जलिनाञ्जल्योरावपति यजमानपत्नीसंबन्धिनोर्द्वयोरञ्जल्योः संसक्तयोः ॥ ११ ॥

उपस्तरणाभिघारग्रहणान् मध्यात्पूर्ववदिति धर्मो भवति द्विरभिधारण मुक्तं ता अविच्छिन्दतीस्ताः संतता जुहुत इत्यर्थः परिणयन मुक्तं तुभ्य मग्ने इति भर्ता जपेत् लिङ्गात्पुनः पत्नी मित्यध्वर्युः । इयं नारीति पत्नी जपेत् । समित मिति ब्रह्मा । एवं पूषणं नु देवं वरुणं नु देवमिति पर्याये पर्याये ॥ १२ ॥ १३ ॥

येन द्यौरुग्रेत्यादयः । आदिग्रहणं य इमे द्यावापृथिवीति प्रभृत्यर्थ मुद्वाहग्रहणमर्थवादमात्रं दक्षिणाकालग्रहणवत् तद्दत्विग्भ्यो दक्षिणा काले

१ ० ख. । २ च्छ. क. । ३ ० ख. घ. । ४-५ ० घ. । ६ ० ख. ।

आकूताय स्वाहेति जयाः प्राची दिग्वसन्त ऋतुरित्यभ्यातानाः। प्राणादपानꣳ संतन्विति संततिहोमा ऋता षाडृतधामेति द्वादशराष्ट्रभृतश्च ॥ १५ ॥ त्रातारमिन्द्रꣳ विश्वादित्या इति माङ्गल्ये ॥ १६ ॥ लाजाः कामे न चतुर्थꣳ स्विष्टकृतमिति ॥१७॥ अथैनां प्राचीꣳ सप्तपदानि प्रक्रमयत्येकमिषे द्वे ऊर्जे त्रीणि प्रजाभ्यश्चत्वारि रायस्पोषाय पञ्च भवाय षडृतुभ्यः—

सखा सप्तदीभव सुमृडीका सरस्वती। मा ते व्योम संदृशी॥

विष्णुस्त्वा मुन्नयत्विति सर्वत्रानुषजति ॥ १८ ॥ पश्चादग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयत्यपि वा दर्भेष्वेव ॥ १९ ॥

इमꣳ विष्यामि वरुणस्य पाशꣳ यज्जग्रन्थ सविता सत्यधर्मा।
धातुश्च योनौ सुकृतस्य लोके रिष्टां मा सह पत्या दधातु ॥

इति योक्त्रपाशꣳ विषाय वाससोऽन्ते बध्नाति ॥ २० ॥

---

दद्यादितिवत् । जयाभ्यातानाः । चकार उद्वाह इत्यस्यानुकर्षणार्थः । जयादीनां मन्त्रप्रसिद्धत्वात्स्वरूपमाहाकूतायेत्यादि त्रातारमिं मङ्गल्य इति मन्त्रप्रशंसार्थं कामेन चतुर्थी लाजाहुतिः कामनुदेवमिति स्विष्टकृद्ग्रहण इति स्वात्मप्राप्त्यर्थम् ॥ १४-१५-१६-१७ ॥

अथैनां भर्त्ता सखा सप्तपदी भवेति लिङ्गादेकमिष इत्यादि भव सुमृडीकेति सर्वत्रानुषङ्गः ॥ १८ ॥

पश्चादग्ने रोहिते चर्मदर्भेष्वेवेति नित्यं विकल्प्यते। पाठसामर्थ्यादपि वा दर्भेष्वेवेति। एवकारश्चर्मव्यावृत्तिं करोतीति केचित्। इमं विष्यामि दर्भरज्जुं विषाय विमुच्य वाससोऽन्ते बध्नाति बध्नः ॥ १९ ॥ २० ॥

---

१-० ख. । २-० घ. ।

अ नुमतिभ्याꣳ व्याहृतिभिश्च त्वन्नो अग्ने, स त्वन्नो अग्ने, अयाश्चाग्नेसीति च ॥ २१ ॥ शमीमयीस्तिस्रोऽक्ताः समिधः समुद्रादूर्मिरित्येताभिस्तिसृभिः स्वाहाकारान्ताभिरादधाति ॥२२॥ अक्षत सक्तूनां दध्नश्च समवदायेदꣳ हविः प्रजननं म इति च हुत्वा वि ते मुञ्चामि रशनाꣳ वि रश्मीनिति च हुत्वा पवित्रे नु प्रहृत्याज्येनाभिजुहोति ॥ २३ ॥ एधोऽस्येधिषीमहीति समिधमादधाति। समिदसि समेधिषीमहीति द्वितीयाम् ॥२४॥ अपो अद्यान्वचारिषमित्युपतिष्ठन्ते ॥ २५ ॥ कुम्भादुदकेनापोहिष्ठीयाभिमार्जयन्ते ॥२६॥ वरो दक्षिणा ॥२७॥ इत्येकादशः खण्डः ॥११॥

---

अनु अनुमतीमित्यादि अयाश्चा जुहोतीत्यन्तं हुत्वा ॥ २१ ॥

शमी शमीमयीश्चैव तिस्रः समिधोऽक्ता घृतेन समुद्रादूर्मिरित्येताभिर्जुहुयादित्यर्थः। अन्यस्तु स्वाहाकारग्रहणादत्रैव समिदाधाने स्वाहाकारो[2] नान्यत्रेति केचित्। वयं तु ब्रूमः—अत्र स्वाहाकारग्रहणस्योपलक्षणार्थत्वात् सर्वत्र समिदाधाने स्वाहाकारः ॥ २२ ॥

अक्षता अनवहता यवा स्तेषां सक्तवो दधि च समवदाय द्विर्द्विरवद्येत्। अवदायेति वचनात्। इदं हविरित्यादि रेतोऽस्मासु धेहीत्यन्तो मन्त्रः। पवित्रानुप्रहरण माज्येनाभिहोमश्च वि तेमुञ्चामीत्यनेन मन्त्रेण मन्त्रान्तरैः साहचर्यादनुक्तोऽपि गम्यते ॥ २३ ॥

एधो पत्नीवादध्यात्। आपो(ऽअद्या)वैतेनोपस्थापनम् ॥२४॥२५॥

आपोहीष्ठीयाभिमार्जनम्। उदकुम्भादुदकुम्भधारहस्तादित्यर्थः ॥२६॥

वरो दक्षिणा। श्रेष्ठा गौर्देयात्। अत्राघारादि नक्षत्रदेवताहोमोऽनुमतिभ्यां व्याहृतिभिरित्यादि मार्जनान्ताद्गम्यते। अन्यस्तूक्तमेकतन्त्रत्वम्। आहोमेषु च सर्वमाघारादि तन्त्रं भवति सीमन्तोन्नयनादौ ॥ २७ ॥

॥ इति पूरणव्याख्याने एकादशः खण्डः ॥

---

१–० क. ष.। २ रा, ग. च.। ३ भ, घ.। ४–० क.। ५ अ, घ.।

## द्वादशः खण्डः

सुमङ्गलीरियꣳ वधूरिमां समेत पश्यतः
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥

इति प्रेक्षकान्व्रजतोऽनुमन्त्रयते ॥ १ ॥ अत्रैव सीमन्तं करोति त्रीश्येतया शलल्या समूलेन वा दर्भेण सेनाहनामेत्येतया ॥ २ ॥ अथाभ्यञ्जन्ति—

अभ्यज्य केशान् सुमनस्यमानाः प्रजावरीर्यशसे बहुपुत्रा अघोराः।
शिवा भर्त्तुः श्वशुरस्यावदायायुष्मतीः श्वश्रूमतीश्चिरायुः ॥

इति ॥ ३ ॥ जीवोर्णयोपसमस्यति—

समस्य केशानवृजिनानघोरान् शिवा सखीभ्यो भव सर्वाभ्यः ।
शिवा भव सुकुलोह्यमाना शिवा जनेषु सहवाहनेषु ॥ इति ॥४॥

---

सुमं—अनेन मन्त्रेण प्रेक्षकान् गच्छतोऽनुमन्त्रयते ॥ १ ॥

अत्रैव—तस्मिन्नेव पितृगृहे । अस्मिन्नेव काले सीमन्तं कुर्यात् त्रिश्येता शलली त्रिषु स्थानेषु या शुल्का शलली उपेक्षा च शललीशब्दस्तु संबन्धार्ते समूलेन वा मूलसंयुक्तेन वा दर्भेण वेति विकल्पे सेनाहनामेत्यनेन ॥ २ ॥

अथ—ततोऽभ्यञ्जनम्—अभ्यज्यकेशानित्यनेन मन्त्रेण ॥ ३ ॥

जीवोर्ण—जीवतो मेषस्य या ऊर्णा तया संवेष्ट्य केशान् बध्नीयात् तत्र संयमनं तेनैव सहोर्णया वेणीकरणम् । समस्य केशानित्यनेन ॥ ४ ॥

---

**अथैनौ दधिमधु समश्नुतो यद्वा हविष्य ँ स्यात् ॥ ५ ॥ तस्य स्वस्ति वाचयित्वा समाना वा आकूतानीति सह जपन्ति ॥ ६ ॥ उभौ सह प्राश्नीतः ॥ ७ ॥ इति द्वादशः खण्डः ॥ १२ ॥**

---

अथैनौ दधि—एनौ दम्पती सहाश्नीतः । दधि च मधुचेत्यर्थः यद्वा दधि मधुभ्यां सह हविष्यस्य विकल्पः ॥ ५ ॥

तस्य—समाना—सह—स्वस्तिवाचनाय ब्राह्मणायोदक पूर्वदानम् स्वस्ति-ब्रूहीति वचनप्रेषणम् ॥ ६ ॥

उभे(भौ) अपि दम्पती सहैकस्मिन्पात्रे युगपच्च प्राश्नीयातामित्यर्थः । अन्यप्राशननिवृत्यर्थं दधि—मधु—हविष्यवचनम् पूर्वस्य पूर्वस्य स्वस्तीति वाचयित्वा ॥ ७ ॥

॥ इति पूरणव्याख्याने द्वादशः खण्डः ॥



---

१—० ग. घ. च. ।

# त्रयोदशः खण्डः

पुण्याहे युङ्क्ते ॥१॥ युञ्जन्ति ब्रध्नमिति द्वाभ्या॰ँ युज्यमान मनुमन्त्रयते दक्षिणमथोत्तरम् ॥ २ ॥ अहतेन वाससा दर्भैर्वा रथ॰ँ संमार्ष्टि ॥ ३ ॥

अङ्कून्यङ्कावभितो रथ॰ँ ये ध्वान्ता वाता अग्निमभिये संचरन्ति दूरे हेतिः पतत्री वाजिनी वा॰ँस्ते नोऽग्नयः पप्रयः पालयन्तु इति चक्रे अभिमन्त्रयते ॥ ४ ॥ वनस्पते विड्वङ्ग इत्यधिष्ठानम् ॥ ५ ॥

सुकि॰ँ शुक॰ँ शल्मलि॰ँ विश्वरूप॰ँ हिरण्यवर्ण॰ँ सुवृत॰ँ सुचक्रम् आरोह सूर्ये अमृतस्य लोक॰ँ स्योनं पत्ये वहतं, कृणुष्व ॥ इत्यारोहयति ॥ ६ ॥

---

इदानीं भर्तृगृहं पुण्याहे गच्छेत्तदाह—पुण्याहे शुभे नक्षत्रग्रहसंयुक्ते दिनेऽनुकूले च गमनार्थं रथादिकंवाहनं कल्पयेत् ॥ १ ॥

युञ्जन्ति आभ्यां रथादा वश्वादिकं युज्यमान मनुमन्त्रयते । युज्यमान आत्मने पदं यदाऽन्यो योजयति युज्यमानवचनात् । अध्वर्युर्वाऽनुमानादुत्तर मेताभ्यामेव मन्त्राभ्यां दक्षिणस्यां धुरि युज्यमानश्वादिकं तथोत्तरस्यामपि ॥२॥

अहतेन संमार्ष्टि द्भिः संशोधयतीत्यर्थः । रथग्रहण मुपलक्षणार्थम् ॥३॥

अङ्कून्यङ्का वभितो रथ मनेन मन्त्रेण चक्रे अभिमन्त्रयते ॥ ४ ॥

वनस्पते—इत्यनेन मन्त्रेणाधिष्ठानं रथस्योपरिस्थान मासन मभिमन्त्रयते इति ॥ ५ ॥

सुकिम्—अनेन मन्त्रेण पत्नी मारोहयत इत्यध्वर्युः प्रयोजकत्वात् । केचित्—यजमानकर्त्तृकमिच्छन्ति ॥ ६ ॥

---

१ ० क. ग. घ. च. । २ हि. क. घ. । ३ नी. ग. च. । ४ ० ग. च. ।

अनुमायन्तु देवता अनुब्रह्म सुवीर्यम् ।

अनुक्षत्रं तु यद्बल मनुमामैतु मद्यशः ॥

इति प्राङभिप्रयाय प्रदक्षिणमावर्त्तयति ॥ ७ ॥

प्रतिमायन्तु देवताः प्रतिब्रह्म सुवीर्यम् ।

प्रतिक्षत्रं तु यद्बलं प्रति मामैतु यद्यशः ॥

इति यथास्तꣳ यन्त मनुमन्त्रयते ॥ ८ ॥

अमङ्गल्यं चेदतिक्रामति अनुमायन्त्वित्ति जपति ॥ ९ ॥

नमो रुद्राय ग्रामसद इति ग्रामे, इमा रुद्रायेति च ॥ १० ॥ 'नमो रुद्रायैक वृक्षसद' इत्येकवृक्षे । 'ये वृक्षेषु शष्पिञ्जरा' इति च ॥ ११ ॥ 'नमो रुद्राय श्मशानसद्' इति श्मशाने । 'ये भूताना मधिपतय' इति च ॥ १२ ॥ 'नमो रुद्राय चतुष्पथसद' इति चतुष्पथे । 'ये पथां पथि रक्षय' इति च ॥१३॥

---

अनुमाय अनेन प्राक् प्रथमं गच्छेदित्यर्थः । प्रतिमा अध्वर्युमिति[1] शेषः । यजमानकर्तृकमेतदनुमायन्ति देवता इत्याशीः कोशात् । एवं च अर्थाद्यजमान आरुह्य प्राङभिप्रयाति प्रदक्षिणमावर्तयति प्रदक्षिणावर्त्तने प्रयोजकत्वं-यजमानस्यावर्त्तयतीति प्रयोगात् ॥ ७ ॥

प्रतिमायन्तु देवता इति रथं यथार्थं प्रदक्षिणमावर्त्तयतीत्यर्थः । अय मपि यजमानकर्त्तृको मन्त्रः ॥ ८ ॥

अमङ्गल्यग्रहणात्–श्मशान–चयनोत्कर–भूम्यादि नातिक्रामति । अनुमायन्तु देवता इत्यतिक्रान्तो जपेत् । यजमानकर्त्तृक मिद मुत्तरत्र मन्त्रा यजमानस्यैव । उद्वहनसंबन्धात् ॥ ९ ॥

नमोरु–ग्रामेऽभिक्रमणे जपेदित्यर्थः । इमारुद्रायेति च नमो–एक वृक्षसद

---

१ रि, प. ।

'नमो रुद्राय तीर्थसद ' इति तीर्थे। ' ये तीर्थानि प्रचरन्तीति ' च ॥ १४ ॥ यत्रापस्तरितव्या आसीदति समुद्राय वैणवे सिन्धूनां पतये नमः । नमो नदीना॰ सर्वासां पतये । विश्वाहा जुषता॰ विश्वकर्मणामिद॰ हविः स्वः स्वाहेत्यप्सूदकाञ्जलीन्निनयति । अमृतं वा आस्ये जुहोम्यायुः प्राणोऽप्यमृतं ब्रह्मणा सह मृत्युन्तरति। प्रासहादिति रिष्टिरिति मुक्तिरिति मुच्यीयमाणः सर्वं भयं नुदस्व स्वाहेति त्रिः परिमृज्याचामति ॥ १५ ॥ यदि नावा तरेत् सुत्रामाणमिति जपेत् ॥ १६ ॥

यदि रथाक्षः शम्याणीवा रिष्येतान्यद्वा रथाङ्गं तत्रैवाग्निमु-

एतत्प्रभृत्येकवृक्षे श्मशाने चतुष्पथे तीर्थे य वृक्षेषु शष्पिञ्जराइति ॥ १० ॥ ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

यत्रापस्तरी–यत्र नद्यादा वाप उत्तरणीया भवन्ति तत्र समुद्रायेत्यप्सूदकाञ्जलिं जुहुयादित्यर्थः । अमृतं वा अमृत मित्यनेन त्रिः परिमार्जनं परिमृज्य वास इति त्रिराचमनमन्त्रः । तूष्णीं परिमार्जनमङ्गानां सामर्थ्या दास्ये जुहोमीति लिङ्गाद् व्यवहितोऽप्यनेन संबन्धः ॥ १५ ॥

यदि नावा यत्र यदि नावा तरेत् सुत्रामाणमित्येता मृचं जपेन्नावांरूढः ॥ १६ ॥

यदिरथाक्षः । यदि रथः शम्या वा दुष्येत भज्येत अणी चक्र धारणार्थाक्षे तन्मेनिकिलिका निहन्यते सा यदि दुष्येत भज्येतेत्यर्थः । अन्यद्वा रथस्याङ्गा युगादि दुष्येतेति वर्त्तते । तत्रैवा । तत्रैव तस्मिन्नेव देशेऽग्निमौद्वाहिकमुपसमाधाय प्रज्वाल्य उपसमाधायेति वचनात् स्थण्डिलादि न भवति । अधोक्षमात्रं कृत्वाऽग्निं प्रस्थाप्य जयप्रभृति भिर्हुत्वा प्राक्स्विष्टकृतात्

१ व्या. क. । २ आशी. ग. च. । ३ ० ग. च. । ४ न्मा, घ. ५ ० ग. च. । ६-७ ० क. घ. ।

पसमाधाय जयप्रभृतिभिर्हुत्वा सुमङ्गलीरियं वधूरिति जपेत्- वध्वा सह वधूं समेत पश्यत ॥ १७ ॥

व्युत्क्राम पन्थां जरितां जवेन शिवेन वैश्वानर इडयास्याग्रतः। आचार्यो येन येन पथा प्रयाति तेन तेन सह ॥

इत्युभावेवोत्क्रामतः ॥ १८ ॥ गोभिः सहास्तमिते ग्रामं प्रविशन्ति ब्राह्मणवचनाद्वा ॥ १९ ॥ इति त्रयोदशः खण्डः ॥१३॥

---

सुमङ्गली रितिवध्वा सह जपेत् । केचिदग्निमन्थन मिच्छन्ति । औद्वाहिकस्याग्नेः समारोप्यानयन ( म् ) वदन्तैः । तदसत् । अग्नि मुपसमाधायेति वचनाद्रथ संबन्धः । स्वप्रत्यक्ष मेवाग्निरथेन वा । अग्रे न सा वा उह्यते । अहतेन वाससा रथमित्युपलक्षणमनोवापेक्षं संमार्ष्टि । तेनाक्षभङ्ग एतत्कर्म भवति । नच रथा दिनोह्यमानं सीमान्तरगमनेऽपि दुष्यति अग्निस्तथाच सदाचार एव मेव । अन्यस्तु तथा च स्मृत्यन्तरे प्रत्यक्षमाग्नित्रयमुक्तम् । विवाहाग्नि मग्रतोऽजस्रं नयन्तीति ततश्च पुरस्तादेवाग्नित्रयं दृष्टादृष्टार्थं प्रत्यक्षनयनं दृष्टं तावत्प्रजय(योज)नं प्रत्यक्षनयने रथाक्षभङ्गादौ पच्यमाने ( ? ) पथि विघ्नो भवेत् । तथा च प्रत्यक्ष पुरस्तान्नीयमान ( ? ) अदृष्टपिशाचादेः सकाशात् । पथि रथ मतीत्य दृष्टं प्रयोजनम् । वध्वा वधूं समेत्य जपः समेत्य सह जपेदित्यर्थोः वधूसंबन्धत्वात् । यजमानकर्तृको जपः ॥ १७ ॥

व्युत्क्राम-व्युत्काम पथां इत्यनेनोभावेव व्युत्क्रामतः । रथाभ्यां समवतीर्य जपतः । उभावेव ग्रहणं पृथग् रथाभ्यां गच्छतः सङ्गपरिहारार्थम् ॥ १८ ॥

गोभिः सह ग्रामप्रवेशोस्तामिते सूर्ये गोभिः सह गोधूलिनेत्यर्थः । ब्राह्मणा ब्राह्मणवचना दनस्तमितेऽपि गोधूलिकादन्यस्मिन्नपीत्यर्थः । केचिदेतस्मादेव वाक्यादत्रापि ब्राह्मणवचनात् क्रियामिच्छन्ति ॥ १९ ॥

॥ इति पूरणव्याख्याने त्रयोदशः खण्डः ॥ १३ ॥



---

१ ० घ. । २-३ ० घ. । ४-५ ० घ. । ६ न्था. ग. च. ।

## चतुर्दशः खण्डः

अपरस्मिन्नन्हः संधौ गृहान्प्रतिपादयीत ॥ १ ॥ प्रतिब्रह्मन्निति प्रत्यवरोहति ॥ २ ॥ मङ्गलानि प्रादुर्भवन्ति ॥ ३ ॥ गोष्ठात्सन्ततामुलपराजिꣳ स्तृणाति ॥ ४ ॥ रथादध्योपासनात्—

येष्वध्येति प्रवसन्येषु सौमनसं महत् ।
तेनोपह्वयामहे ते नो जानन्त्वागतम् ॥ इति तयाभ्युपैति ॥ ५ ॥

गृहानहꣳ सुमनसः प्रपद्ये वीरꣳहि वीरवतः सुशेवा
इराꣳवहन्ती घृतमुक्षमाणास्तेष्वहꣳ सुमनाः सꣳ वसाम ॥

इत्यभ्याहिताग्निꣳ सोदकꣳ सौषधमावसथं प्रतिपद्यते रोहिण्या मूलेन वा यद्वा पुण्योक्तम् ॥ ६ ॥ पश्चादग्ने रोहिते चर्मण्या-

---

अपरस्मिन्नन्हो दिवसस्यापरस्मिन् यस्मिन्संधौ निशायामित्यर्थः । गोधूलिके वधूं गृहे प्रपादयेत् प्रवेशयेदित्यर्थः ॥ १ ॥

प्रति—अनेन प्रत्यवरोहयेदिति । रथाद्यजमानः ॥ २ ॥

मङ्गलानि-मङ्गलानि दधिचन्दनादीनि मङ्गलसूक्तवाक्यानि च गृहात्प्रादुर्भवन्ति प्रकटीक्रियन्ते ॥ ३ ॥

गोष्ठात्-गोष्ठं गृहाद् बाह्यं द्वारादिप्रदेशं संततामुलपराजिम् । प्रागग्रान् दर्भान् स्तृणाति । रथादारभ्य गृहं यावदित्यर्थः । संतता अविच्छिन्ना स्तृणीयात् । उपासनं गृहमाहुः । अध्वर्यु.स्तरणं कुर्यात् । येष्वध्येत्यनेन मन्त्रेणोलपराजिं कृत्वा तयेति सर्वनाम्नोलपराजिरेव परामृश्यते । तयोलपराज्याभ्युपैद्गच्छति । रथादध्योपासनात् । अभ्याहि (?) ॥ ४ ॥ ५ ॥

गृहानहं सुमनस इत्यनेन मन्त्रेणाभ्याहिताग्निमग्निं पुरस्कृत्य सोदकं सौषधं लाजादि चौषधं गृहीत्वा आवसथं गृहं पित्रनुज्ञया प्रविशेदित्यर्थः ।

---

१—० क. घ. । २ :, ग. च. । ३—० क. घ. । ४–५—० घ. । ६ घमलम् ग. च. ।

नडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयत्यपि वा दर्भेष्वेव ॥७॥ अथास्यै ब्रह्मचारिणमुपस्थ आवेशयति–

सोमेनादित्या बलिनः सोमेन पृथिवी मही
असौ नक्षत्राणामेषामुपस्थे सोम आहितः ॥ इति ॥ ८ ॥

अथास्य तिलतण्डुलानां फलमिश्राणामञ्जलिं पूरयित्वो-त्थाप्याथास्यै ध्रुवमरुन्धतीं जीवन्तीꣳ सप्तऋषीनिति दर्शयेत् ॥९॥

अच्युता ध्रुवा ध्रुवपत्नी ध्रुवं पश्येम सर्वतः
ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुलेयम् ॥

इति तस्याꣳ समीक्षमाणायां जपति ॥ १० ॥

---

यस्य तु पिता पृथगेव रथं प्रवेशार्थं नान्यं जानाति स पितृगृहे[1] एवं प्रतिपद्यते तस्मिंश्च विद्यन्त एवाग्न्यादिकान्नाद्यानि विशेषणमनर्थकं स्यात्[2] । पितृगृहेऽभ्या-हिताग्न्यादिः । अविद्यमानपितृकस्य तु यद्याधा(घा)रणमौद्वाहिकस्य नियम्यत इति वक्ष्यार्मः । रोहिण्यां–रोहिणीनक्षत्रे मूले वा । यद्वा ज्योतिःशास्त्रादौ पुण्यमुक्तं तेनानुकूलेन प्रशस्तं मुहूर्तम् । आवसथं प्रतिपद्यत इत्यर्थः पश्चादन-डुहो दर्भैः सह तुल्यो विकल्पस्तेषु वधूं तेषु केवलेषु चर्मण्यास्तीर्णेषु वा उपवेशयेदित्यर्थः ॥ ६ ॥ ७ ॥

**अथास्या** उपस्थ उत्सर्गः ब्रह्मचारी मार्गवासस्त्वादिधर्मोक्तः । सोमे-नादित्या उपवेशनमन्त्रः ॥ ८ ॥

**अथास्येति** ब्रह्मचारिणोऽस्येत्यञ्जलिं पूरयेदस्या उत्थापयते अथास्यै ध्रुवा–अस्यै वध्वै ध्रुवामरुन्धतीत्यादीनि नक्षत्राणि दर्शयेत् जीवन्ती सप्तऋ-षीणामन्तरा ताराः ॥ ९ ॥

**अच्युता** एतत्तस्यां वध्वां ध्रुवादि समीक्षमाणायां जपति ॥ १० ॥

---

१ हम्, ग. च. । २ पा, क. घ. । ३–४–० घ. । ५–६–० घ. ।

श्वोभूते प्राजापत्यं पयसि स्थालीपाकꣳ श्रपयित्वा तस्य जुहोति । आज्यशेषे[२] दधिसमानीय तेन हुतशेषेण[३] ॥ ११ ॥

चक्रीवानडुहो वा मे वाङ्मैतु ते मनः
चाक्रवाकꣳ सꣳ वननं तन्नौ सꣳ वननं कृतम्–

इति यजमानस्त्रिः प्राश्नात्यवशिष्टं तूष्णीं पत्नी ॥ १२ ॥ अपरान्हे पिण्डपितृयज्ञः स व्याख्यातः ॥ १३ ॥ सꣳ वत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं [४]त्रिरात्रमेकरात्रं[५] वा ॥ १४ ॥

---

श्वोभूते स्थालीपाकग्रहणं स्थालीपाकधर्मार्थम् । एतेन स्थालीपाकाः सर्वत्रेति वचनात् । प्राजापत्यं प्रधानस्थाने प्रजापतये स्वाहेति होमं कुर्यात् । आज्यशेषे दधि समानीय मिश्रीकृत्यानेन दध्ना सह स्थालीपाकस्य हुतशेषम् ॥ ११ ॥

चक्रीवानडुहावित्यनेन मन्त्रेण यजमानस्त्रिः प्राश्नीयात् । अवशिष्टं भुक्तशिष्टं तूष्णीं पत्नी त्रिः प्राश्नातीति वर्तते । एतस्मादन्यत्रापि पत्न्या (अ)वशिष्टभक्षणमस्तीति गम्यते तथा च न तस्य स्त्रियः प्राश्नन्तीति प्रतिषेध वचनमनर्थवद्भवति ॥ १२ ॥

अप–अपरान्हे पिण्डपितृयज्ञः । श्वोभूत इत्यधिकारात् तस्मिन्नेवाहन्य-परान्ह इति गम्यते नत्वमावास्यायाम् । स व्याख्यातः । चन्द्रादर्शनेऽमावा-स्यायामित्यत्र ननु चन्द्रादर्शन एव स्यात्स व्याख्यात इति वचनात्कालोपि व्याख्यात एव नैतदस्ति अपरान्हग्रहणमनर्थकं स्यात् तस्मादमावास्या-निवृत्यर्थं पुनरपरान्हग्रहणम्[६] ॥ १३ ॥

संवत्सरं चरत इति द्विवचनात्पत्न्यपि ब्रह्मचारिणी । अनन्यपुरुषादि ध्यानं ब्रह्मचर्यं पत्न्याः । द्वादशतुल्यो विकल्पः । तेनानृतावप्युपगमनं सिद्धम् ॥ १४ ॥

---

१–२ ( एवम् ) क. घ. । १–३–० ग. च. । ४–५ अधिकम्, क. घ. । ६ मनर्थं, ? क. ।

अथास्यै गृहान् विसृजेत् ॥१५॥ योक्त्रपाशं विषाय तौ संनिपातयेत्—

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।

इह प्रजामिह रयिꣳरराणः प्रजायस्व प्रजया पुत्रकाम ॥

अपश्यं त्वा मनसा दीध्यानां स्वायां तनूꣳ ऋत्विये बाधमानाम् ।

उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे[२] ॥

प्रजापतिस्तन्वं मे जुषस्व त्वष्टा देवैः सहमान इन्द्रः ।

विश्वेदेवैर्ऋतुभिः सꣳ विदानः पुꣳसां बहूनां मातरौ स्याव ॥

अहं गर्भ मदधामोषधीष्वहꣳ विश्वेषु भुवनेष्वन्तः ।

अहं प्रजा अजनयं पृथिव्या अहं जनिभ्यो अपरीषु पुत्रान् ॥

इति स्त्र्यादिव्यत्यासं जपति ॥ १६ ॥ करदिति भसदमभिमृशति ॥ १७ ॥ जननीत्युपजननम् ॥ १८ ॥ बृहदिति जातं प्रतिष्ठितम् ॥ १९ ॥ एतेन धर्मेण ऋतावृतौ संनिपातयेत् ॥ २० ॥

इति चतुर्दशः खण्डः ॥ १४ ॥

---

अथा—गृहाधिकारं प्रयच्छेदित्यर्थः । पत्नी वैपारिणाह्यस्येश इति श्रुतेः । अर्थस्य संग्रहे चैनामिति ( म. ९-११ ) स्मृतेश्च ॥ १५ ॥

योक्त्र—योक्त्रपाशं वाससोऽन्ते यद्वहन्तद्विमुच्य तौ दम्पती एकस्मिन् शयने संनिपातयेद् इति प्रत्येकमभिसंपद्यते । तदुपरि भार्यां भार्या[३] पतिं च[४] संनिपातयेत् संगमयेत् स्वं स्वं प्रति । अवश्यम् । एते चत्वारोऽस्मिन्नुपगमनमन्त्रास्त्र्यादिव्यत्यासं दम्पत्योर्जपः । पत्नी पूर्वम् ॥ १६ ॥

करत्—भसदिति गुह्यप्रदेशं (?) पत्न्याः । जननीति—उपजननं प्रजननम् । बृहत्—एतेन प्रतिष्ठितमभिमृशतीत्यनुवर्त्तते । एतेन ऋतुकाले तौ संनिपातये देवमादिना धर्मेण स्वार्थे णिच् परस्परापेक्षं प्रयोजकत्वं वा च[६] ( च्यम् ) ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

॥ इति पूरणव्याख्याने चतुर्दशः खण्डः ॥

---

१ धार्यु, ख. । २ मा, ग. । ३—० घ. । ४ च पतिं, क. । ५—६—० ध. ।

## पञ्चदशः खण्डः

तृतीये गर्भमासे अरणी आहृत्य षष्ठेऽष्टमे वा जयप्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेष्वासीनायाः पत्न्याः सर्वान् प्रमुच्य केशान्नवनीतेनाभ्यज्य--

तृतीये उक्तं बृहदिति जातं प्रतिष्ठितमिति तत आरभ्य तृतीये गर्भमासे अरणी सीमन्तं करोति। अरणी द्वादशाङ्गुले काठके परिशिष्टे उक्ते। जयति--जयेभ्यः प्रभृति तेभ्यः प्राग्ये स्युः। आघारादयस्ते जयप्रभृतयस्ते हुत्वा पवित्रादि होमे वक्ष्यमाणं कर्म कुर्यात्। पश्चादासुगर्मा अत्रारणी आहृत्येति दर्शनात्। प्रागुदश्वमित्यादौ विवाहे अरण्याहरणं तत्राघारादि अनुमती व्याहृत्यादि दर्शनादिहाघारादि पवित्रहोमान्तं द्रष्टव्यम्। प्रधानस्थानेऽग्निं यजेदनादिष्टदेवतत्वात्। यो गुरुस्तमर्हयेत्। गुरुमर्हयेदित्यनेनैव सिद्धे यो गुरुस्तमर्हयेदिति स्वयं तत्र यो गुरुरिति वाक्येन प्रसिद्धं गुरुर्निषादीनि कर्माणीति स्मृतौ यदुक्तम्। तमनुद्योत्तरेणार्हणानि विधीयन्ते॥ केचित्पुनः पत्नीमिति मन्त्रलिङ्गात् पतिकर्तृकमिच्छन्ति पुत्रे जाते--यस्य भावेन सप्तमी वरं दद्यादुपाध्यायादेर्दक्षिणां न तु पुत्रजन्माख्यातुः शूद्रस्यापि संप्रदानत्वप्रसङ्गात्। अरणीभ्यामग्नेरायुर सीति निगदव्याख्यातम्। अरणीभ्यामित्युक्ते अरणी आह्रियेते नतु सीमन्तारणी सीमन्तस्य स्त्रीद्वारा पुरुषद्वारकत्वं न तु साक्षात् तस्मात्स्त्रीद्वारा संस्कारार्थमेव ते अरणी इतरथा सर्वेषां गर्भाधानसाधारणत्वात्सर्वगर्भेषु जातकर्मणि ताभ्यामरणिभ्यामाग्निमन्थनं स्यात्। प्रतिगर्भं वा तृतीये गर्भमासे अरण्याहरणादि सीमन्तकरणात् गुर्वर्हणात्तस्मात्तृतीयगर्भमासाहृताभ्यामरणिभ्यामग्निमन्थनं स्यात्। प्रतिगर्भं न किंचित्प्रमाणं प्रतिगर्भाहरणं मुक्त्वाऽनेन प्रतिगर्भमाहरण(म्) सीमन्तप्रयुक्तत्वादाहरणस्य तथाचैकवाक्यत्वमरणी आहृत्य जयप्रभृतिभिर्हुत्वेति न किंचिदेतत् प्रकृते-

---

१--० ख.। २ जयत्, ग. च.। ३--० ग. घ. च.। ४--५--० क. घ.। ६--९--० घ.। ७ द, क.। ८ मम्, क.। १०--११--० घ.। १२--१५--० घ.। १३ र्भाणाम्, ग.। १४--० ग. च.।

त्रिश्येनया शलल्या शमीशाखया च स पलाशया पुनः पत्नीमग्निरदादिति सीमन्तं करोति ॥ १ ॥ इति पञ्चदशः खण्डः ॥ १५ ॥

---

मनुसरामः । अन्यथा तदस्त्यन्यथा तं व्याचष्टे तृतीये गर्भमास इत्यादि । तृतीये गर्भमासे यदरण्याहरणं तदाहरणमात्रं दृष्टादृष्टार्थं तावत् । पुत्रे जाते सति तत्कर्मोच्यते तच्च जातमात्र एव तथा च स्मृत्यन्तरम्—कुमारंजातं पुरान्यैरालम्भात् दधिमधुनी हिरण्यादिकात्सहिरण्येन प्राशयेदिति । अन्यैर्ग्रहणमित्यर्थः । युक्तं चैतद् जातमात्र एव जातकर्म यद्दधिप्राशनं विहितं ततस्तनदानम् एवं च यदि जातकर्मणः कालान्तरं प्रतीक्षते तदा न, तस्य प्राणातिपातः स्यात् । एवमाहरणं न तदारण्योः शीघ्रं भवतीति । पूर्वमसात्कस्मिंश्चिन्मास आहरित ( ते ) व्ये इति दृष्टार्थमाहरणम् । तृतीये तु यदुक्तं तददृष्टार्थं तस्मादाहरणमात्रमेव संस्कारकम् । तयोरुपयोक्ष्यमाणत्वाद् तद्वा यूपं छिनत्तीतिवत् । ततस्तस्मिन्नेव मासे सीमन्तविधानं तच्च कथमित्याह—जयाप्र—जयप्रभृतयश्च जयाभ्यातानाः सन्ततिहोमा राष्ट्रभृतः । एवं च प्रभृतिशब्द आद्यर्थवाची न प्रागर्थे वर्णितो भवति पञ्चमीसमासश्च लाक्षणिकः । बहुव्रीहिषु लाक्षणिकः । तैश्च प्रधानस्थाने होमः । यथाऽऽयुष्यहोमादग्नेरायुरसीत्यनुवाकेन तैश्च हुत्वानन्तरमेव सीमन्तकरणं हुत्वेति वचनात् । कथं पश्चादग्नेः पश्चाद्दर्भेषूपविष्टायां सत्यां सर्वान् केशान् विमुच्य आभ्यज्य नवनीतेन त्रिश्येतां शलल्युक्तां ( तया ) शमीवृक्षशाखया च सपर्णया समूलेन दर्भेण वा पुनः पत्नीमित्यनेन मन्त्रेण सीमन्तं स्त्रीषु प्रसिद्धं कुर्यादित्यर्थः ॥ अष्टमे फलस्नानं केचित्पठन्ति तद्व्याचक्ष्महे ॥ १ ॥ ( अष्टमे इत्याद्यवतरणं तच्च खण्डपूर्त्यनन्तरमुचितमिति भाति )

॥ इति पूरणव्याख्याने पञ्चदशः खण्डः ॥

—⊛⊛—

---

१–१०–० घ. । २ थास्ते, क. ख. । ३–४ तथान्य, क. ख. । ५ रं, ख. । ६ क्ष्य, ग. च. । ७–८ गृहेऽरण्या यागाहरणेऽरण्योस्तदाविघ्नं न ग. च. । ९ दीक्षासु, क. । ११ सन्ति, क. ख. । १२ वचन, ग. च. । १३–१४–० घ. । १५ तया, घ. । १६ क्तया, घ. ।

## षोडश: खण्ड:

—•—

**अष्टमे गर्भमासे जयप्रभृतिभिर्हुत्वा फलैः स्नापयित्वा या ओषधय इत्यनुवाकेनाहतेन वाससा प्रच्छाद्य गन्धपुष्पैरलंकृत्य फलानि कण्ठे वै संसृज्याग्निं प्रदक्षिणं कुर्यात् ॥१॥ प्रजां मे नर्य पाहीति मन्त्रेणोपस्थानं कृत्वा गुणवतो ब्राह्मणान् भोजयेत् ॥२॥ फलानि दक्षिणां दद्यात् ॥ ३ ॥ ततः स्वस्त्ययनं च ॥ ४ ॥**

---

**अष्टमे**–अतिक्रान्तेऽष्टमे ज्ञेयं व्यवहारदर्शनात् **जय**–प्रागेव तद्व्याख्यातम् । **फलैः** फलग्रहणमुपलक्षणार्थं फलसर्वौषध्यादिसंयुक्तेन वारिणा स्नापयेदित्यर्थः । **या ओषधयः**–निगदव्याख्यातं गन्धपुष्पैः समलंकृत्येति बहुवचनाद्रत्नादि भूषितायाः फलानि प्रशस्तानि फलानि कण्ठे हारं कृत्वा अभ्रीयात् अग्नेः १) अग्निं प्रदक्षिणीकृत्योपतिष्ठते ॥ १ ॥

**प्रजां मे नर्य पाहीत्यनेन** मन्त्रेण ततो गुणवन्तो विद्वांसो वृत्तवन्तश्च ब्राह्मणा भोजयितव्याः ॥ २ ॥

तेषु फलानि दक्षिणां च दद्यात् ॥ ३ ॥

**स्वस्त्ययनं च** स्वस्त्यादिशब्दयुक्ता मन्त्रा वाचयितव्याः । अत्रोच्यते कस्मिन्नग्नावेतौ होमौ क्रियेते किं ये अरणी आहृते ताभ्यां मथित्वोत[1] दीप्यमानमाहृत्याहोस्विदौद्वाहिके इति संशयः । केचिदाहुः । ताभ्यामरणिभ्यां मथित्वा कर्त्तव्यौ ते चारणी परित्यजेत् । तदयुक्तं यदि गर्भसंस्कारौ[2]वेतौ किमेतयोः परित्यागः[3] । अथ स्त्रीसंस्कारार्थौ तदस्य औद्वाहिकोऽग्निर्विद्यत- एव किमिति तत्र न क्रियते । अथैव[4] मुच्यते औद्वाहिकस्य शालाग्निकरणं- नास्ति जीवति पितरि[5] ततो यत्र दीप्यमाने किमिति न क्रियते । अथवा स्त्रीसंस्कारत्वान्न तत्र क्रियते लौकिकाद्वा तस्येति यद्युच्यते को हि विशेषो

---

१ त यत्र, ख. । २ रान्ते, ग. च. । ३–४ ० ख. घ. । ५ पिता, ग. च. ।

## यो गुरुस्तमर्हयेत् ॥ ५ ॥ इति षोडशः खण्डः ॥ १६ ॥

यदरणिभ्यामग्निं मथित्वा तयोः परित्यागे यत्र दीप्यमानोऽग्निः स्यात्त स्मादौद्वाहिकेऽग्नौ क्रियते । यत्तूच्यते—औद्वाहिकस्य प्रेतपितुर्विधानाज्जीवत्पितृकस्याभावात् कथं तत्र क्रियत इति नैतत् तस्यापि संभवात् कथं संभव इति चेत् कस्माद्वचनात्तयोः परित्यागः । अथ स्त्रीसंस्कारार्थौ—उत्तरकालं निमित्तनैमित्तिककर्मणामभावादर्वागेवारण्यभावः । तदभावात्तयोः परित्याग इति चेन्नैतदेवं यतो न व्रतादनयोः परित्यागो यस्मात्तयोराहरणं तदा संस्कारविपर्यासार्थं नहि कं (?) अरणि कर्मणि आहरणं श्रूयते । तस्माद्यथा वसन्तादिकालः सकृदाहृतानामग्नीनामुत्तरकाले श्रौतनित्यनैमित्तिककाम्यादयो भवन्ति तथा सकृदाहृतयोस्तस्मा (?) न्तः संस्कारकलापः । यत्तदौद्वाहिकं प्रेतपिता शालाग्निं कुर्वीतेति वचनं तदुत्तरकालमुक्तानां स्मार्तनित्यनैमित्तिकादिप्राप्त्यर्थमतश्चौद्वाहिकं शालाग्निं कुर्वीतेत्युक्तम् । शालाग्नित्वं च तस्य तदेव यच्छालायां भवति । ये वैश्वदेवादयस्ते तदा भवन्ति नतु प्राक् तदा तेषामनुष्ठानम् । लोके शालाशब्दो गृहपर्यायः । तथा च गृह्यकर्माणीति छान्दोग्येऽभिहितं बाह्यन्यायोक्तानि वैतानिकानि गृह्याणि वक्ष्याम इत्युक्तं तस्मादेतदेव युक्तं यदौद्वाहिके नाग्नावात्मीये स्त्रिया एतौ संस्कारौ क्रियेते यत्त्वरण्योराहरणं तदुक्तप्रयोजनम् । अतश्च जातकर्मणि मनुराह नतु सीमन्तोन्नयनेऽतो जातस्य गर्भस्य जातकादि स्वस्मिन्नग्नौ क्रियते मातृस्थस्य तु मातृद्वारे यथान्नपानादि मातृद्वारौ तस्योपकरोति । अथैते अप्यरणीयवर्चोऽन्नपानादिमातृप्रधानं सन्निपत्योपकरोति एव सेत्यपिकर्मणि ते च प्रतिगर्भे स कृत्वा क्रियतामिति नात्रास्माकं विप्रतिपत्तिरित्यलमतिप्रसङ्गेन ॥ ४ ॥

यो गुरुस्तमर्हयेत्—पुत्रे जाते यो गुरुराचार्यस्तमर्हयेत्पूजयेदित्यर्थः ॥५॥

इति पूरणव्याख्याने षोडशः खण्डः ॥ १६ ॥



१ यस्ता, ग. च. । २ लं, ख. ग. च । ३ रे, ख. ग. च. । ४ चा, ख. । ५ णी, क. ख. च. । ६ संस्कृत्वात्, ग. । सकृत्वात्, च. । सत्क्रि, ख. । ७ क्रियते, क. । ८ एतत्सूत्रभाष्यं (घ.) पुस्तके विरलतया खण्डश, आनुपूर्वीरहितमपूर्णमुपलभ्यतेऽन्तेऽष्टावक्रएवमुक्तवान् तत इदानीं भट्टश्रीश्रीकुमारोक्तं प्रकृतं लिख्यत इति च दृश्यते (गे,च)।

## सप्तदशः खण्डः

पुत्रे जाते वरं ददाति ॥ १ ॥ अरणिभ्यामग्निं मथित्वा तस्मिन्नायुष्यहोमाञ्जुहुयात् ॥ २ ॥ अग्नेरायुरसीत्यनुवाकेन प्रत्यृचं प्रतिपर्यायमेकविंशतिमाज्याहुतीर्जुहोति ॥ ३ ॥ आज्यशेषे दधिमध्वपो हिरण्यशकलेनोपहृत्य त्रिः प्राशयति ॥ ४ ॥

अश्मा भव परशुर्भव हिरण्यमस्तृतं भव
वेदो वै पुत्रनामासि सजीव शरदः शतम् ॥

पुत्रे जाते सति नतु दुहितरि जातायां तथा वरं च तस्मै दद्यात् तथा पुत्र एव जाते ताभ्यामरणिभ्यामग्निं मथित्वा जातकर्मादि कुर्यात् । न दुहितरि तस्यां तूष्णीमेव कुर्यात् तथा[1] स्मृत्यन्तराणि 'तूष्णीमेताः क्रियाः स्त्रीणां विवाहश्च[3] समन्त्रक' (या. १,१३) इति तथा आवृतात् कुमार्यैरावृता(?)क्रमेण तूष्णीं कुर्यादित्यर्थः । अत्र ताभ्यामरणिभ्यामित्यादि तदेव ज्ञेयम् । तस्मिन्निति किमर्थं यावता प्रकृतत्वादेव तत्र भवेदिति सत्यं किन्तु शाखान्तरमाशङ्क्य प्रतिषेधार्थम् । शाखान्तरे ह्येवं श्रूयते तूष्णीं निर्मन्थनं आघ्रात्सान्तपनं यत्र दीप्यमानं व्यावृत्यर्थं तस्मिन्निति । तस्मिन्नेव तूष्णीं निर्मन्थे जातकर्मादि कुर्यान्नेतरयोरिति[2] ॥ १ ॥ २ ॥

अग्नेरा—अनेनानुवाकेनाज्यं जुहुयादित्यर्थः । तत्रैवाघारादि पूर्वतन्त्रं तथा अन्वघनोऽनुमतिरित्यादि परं तन्त्रम् भवति यतः साक्षान्नोक्तं स्मृत्यन्तरे विकल्पः श्रूयते कृताकृतमाज्यहोमेषु परिस्तरणम् । तथा आज्यभागाविति । आज्यशेषग्रहणं सर्वतन्त्रोपलक्षणार्थमित्यर्थः । भट्टाष्टावक्र एवमुक्तवान् । इदानीं भट्टश्रीकुमारोक्तं प्रकृतं लिख्यते ॥ ३ ॥

आज्यशेषे दधि पवित्रादि होमान्ते आज्यशेषे दधिमध्वानीय

१ मनयोर्गुरुतार्यम, ख. ग. च. । २–४–० घ. । ३ स्तु, ग. च. ।

इति प्रादेशेनाध्यधि प्रतिमुखं प्रदक्षिणᳯं सर्वतोऽभ्युद्दिशति ॥ ५ ॥ पलाशस्य मध्यपर्णं प्रवेष्ट्य तेनास्य कर्णयोर्जपेत्—भूस्ते ददामीति दक्षिणे भुवस्तेददामीति सव्ये स्वस्ते ददामीति दक्षिणे भूर्भुवः—स्वस्ते ददामीति सव्ये ॥ ६ ॥ इषं पिन्वोर्जं पिन्वेति स्तनौ प्रक्षाल्य प्रधापयेत् ॥ ७ ॥ इति सप्तदशः खण्डः ॥ १७ ॥

---

हिरण्येनोपहत्य प्राशनं तूष्णीं प्रादेशेनाभ्युपदिशति मुखं पञ्चकृत्वोऽश्मा भव परशुर्भवेति मन्त्रेण ॥ ४ ॥ ५ ॥

पलाशस्य मध्यमपर्णं प्रवेष्ट्य कर्णे पिधाय भूस्ते ददामीति व्यत्यासाज्जपेत् तेषां स्तनौ प्रक्षाल्य मन्त्रेण पिन्वेति[1] तूष्णीं प्रधापनम् । आशङ्क्य च कुमारको मन्त्रं वाचयितुं प्रधापयतीति प्रेषणमात्रे णिच् ॥ ६ ॥ ७ ॥

॥ इति पूरणव्याख्याने सप्तदशः[2] खण्डः ॥ १७ ॥



---

१ पि स्तनस्य मध्यमत्वात्, ग. च. । २ षोडशः, ग. च. ।

## अष्टादशः खण्डः

दशम्याꣳ रात्र्यां पुत्रस्य नाम दध्याद् घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरꣳवा त्र्यक्षरं दान्तं कुमारीणाम् ॥१॥ तेनाभिवादयितुं त्यक्त्वा पितुर्नामधेयꣳयशस्यं नामधेयं देवताश्रयं नक्षत्राश्रयं देवतायाश्च प्रत्यक्षं प्रतिषिद्धम् ॥२॥ स्नात्वा सहपुत्रोऽभ्युपैति ॥३॥

दशम्यां रात्र्यां जातकर्मप्रभृति दशमी रात्रिर्गृह्यते । पुत्रस्येति वचनात्पितुरधिकारः । दध्यात्कुर्यादित्यर्थः । रात्र्यामित्यधिकरणे च सप्तमी दशम्यां रात्र्या विशेषणम् । तेन सूतिकाशौचेऽपि नामकरणं वचनादभिप्रेयते[१] । केचित्तु–एकादश्यां वा, सूतकं त्विच्छन्ति दशम्यां रात्र्यां व्यतीतायामिति द्रष्टव्यम् । अक्षरं घोषवान् वर्ण आदिर्(यस्य)घोषवदादि । अन्तर्मध्ये अन्तस्था यस्मिंस्तदन्तरंतस्थं अक्षरं वा वर्णानां प्रथम द्वितीय शषसेभ्योऽन्ये घोषवन्तः । यरलवा अन्तस्था त्र्यक्षरं दान्तं दो(दा)न्ते यस्मिंस्तद् दान्तमिति दा इति वर्णो गृह्यते घोषवदाद्यधिकारात् । देविदेति एवमादिकं दान्तम् । अत्रापि घोषवदाद्यन्तरन्तस्थमिति बाध्यते[३] त्र्यक्षरेण ॥ १ ॥

तेन देवदत्तोहं भोर(अ)भिवादयामीति । स्त्री अभिवादये देविदा अहम् । त्यक्त्वा पितुः संबन्धिनो नामधेयमिति षष्ठी पृथक् कृतेत्यन्र्तः[४] अवयव इत्यस्मात्पितृनामधेयावयवात् संबन्धिनीयं पुत्रनामधेये गुप्तं तद्यशस्यं यशसे हितं यशसो हितं नामधेयं देवताश्रयं त्यक्त्वान्[५](क्त्वा) ब्रह्मपितुर्देवप्रत्यक्षमिति चकारार्थः प्रत्यक्षं प्रतिषिद्धं पितुर्देवतायाश्च प्रत्यक्षे परिपूर्णं प्रतिषिध्यते । अन्ये परस्य नामधेयं शर्मवद् ब्राह्मणस्येत्यादि स्यादिति वदन्ति ॥ २ ॥

स्नात्वा सहपुत्रोऽभ्युपैति–अग्निमभि आसीनो भवति । अन्यस्तु त्यक्त्वा पितुर्नामधेयमिति पाठात्पितुर्नामधेयं यदा गृह्णीयात् तदा त्यक्त्वाऽन्यश्च प्रह्वः सन् देवतायाश्च तत्रैव गृह्णीयादथवाभिवादनस्य प्रकृतत्वात्पितुरभिवादनं कुर्यात् प्रह्वः सन् नामधेयमुच्चारयेत् । देवतायाः प्रत्यक्षं तथैवात्मनो नामगृह्णीयात् । प्रतिषिद्धं[६] तेन श्रद्धया[७] यदाभिवादनं करोति तदा नामधेयंनोच्चारयेत् । सहपुत्रोऽभ्युपैति सहेति नामधेयमभिवादवाक्ये नोच्चारयेत् ॥३॥

१–२–० घ. । ३–० क. ख. । ४ तः, क. घ. । ५ क्तान्, ख. ग. च । ६ द्धं सूत्रेति सूत्रं, ग. च. । ७ श्रद्धा, ख. ग. च. ।

**अथैनमभिमृशति—'अग्नेष्ट्वा तेजसा सूर्यस्य वर्चसा विश्वेषां त्वा देवानां क्रतुनाऽभिमृशामीति प्रक्षालितपाणिर्नवनीतेनाभ्यज्याग्नौ प्रताप्य ब्राह्मणाय प्रोच्याभिमृशेदिति श्रुतिः ॥ ४ ॥ वरं कर्त्रे ददाति ॥ ५ ॥**

**अङ्गादङ्गात्संभवसि हृदयादधिजायसे**

**आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ इति प्रवासादेत्य पुत्रस्य मूर्द्धनि जपेत् ॥ ६ ॥ न मधुमांसे प्राश्नीयादापशुबन्धात् ॥ ७ ॥ संवत्सरे चाजाविभ्यामग्निधन्वन्तरी यजेत् ॥ ८ ॥ इति अष्टादशः खण्डः ॥ १८ ॥**

**अथैनमभिमृशति**—अथैनं कुमारमग्नेष्ट्वेत्यनेन मन्त्रेण प्रक्षालितपाणिर्नवनीतेन तेन हस्तौ अभ्य[1]ज्याग्नौ प्रताप्य ब्राह्मणाय प्रोच्याभिमृशेदिति श्रुतिः श्रुतिग्रहणमादरार्थं स्वास्या[2]नुलिप्य[3] प्रताप्य तापयित्वा ब्राह्मणाय प्रोच्याभिमृशेदिति सूत्रं तेन ब्राह्मणानुज्ञयाऽभिमृशेदित्यर्थ ॥ ४ ॥

**वरं कर्त्रे** जातकर्मादिकर्त्रे गुरवे इति। **अङ्गात्**—**प्रवासादेत्य** कार्यवशात्प्रोषितः। मूर्द्धनि जपेत् पुत्रस्य ॥ ५ ॥ ६ ॥

**न मधुमांसम**(सेप्रा)श्नीयात् पितृयज्ञाचार्वाक् प्रतिषेधोऽयं मांसभक्षणस्य पुत्रजन्मनः प्रभृति संवत्सरः पितुरधिकारोयं यथा पुत्रे जाते वैश्वानर्यां पुत्रफलार्थायां वैतानेष्वग्निषु। एवं धन्वन्तरियागो[4]ऽनाहिताग्नेस्तु शालाग्नौ। अपि च नात्र वैश्वानरीवत्पुत्रफलार्थता श्रूयते किं तर्हि जातपुत्रेणैव तत्कर्त्तव्यमेतदेवनियमात् प्रतीयते मांसभक्षणे प्रतिषेधवत्। आदित्यदर्शनं केचित्पठन्ति। अन्नप्राशनादेतदहं(द्वयं) व्याख्यास्यामः[5] ॥ ७ ॥ ८ ॥

॥ इति पूरणव्याख्याने अष्टादशः खण्डः ॥



१ संधाप्य, ग. च. । प्रभजय, क. । २ आस्य मनु, घ. । स्वास्यम्पनु, ग. च. । ० ख. । ३ प्य, क. ग. घ. च. । ४ गे, ग. च. । ५—६—० घ. ।

# एकोनविंशः खण्डः

अथादित्यदर्शनम् ॥ १ ॥ चतुर्थे मासि पयसि स्थालीपाकँ श्रपयित्वा तस्य जुहोति ॥ २ ॥ आदित्यः शुक्र उदगात्पुरस्ताद्धँ सः शुचिषद् यदेदेनमिति सूर्यस्य जुहोति ॥ ३ ॥ उदुत्यं जातवेदसमित्येतयोपस्थायादित्याभिमुखं दर्शयेत्—

'नमस्ते अस्तु भगवन् शतरश्मे तमोनुद ।
जहि मे देवदौर्भाग्यं सौभाग्येन मां संयोजयस्व '—

---

अथादित्य—अथेत्यानन्तर्ये[1] जातकर्मानन्तरमादित्यदर्शनं कुर्यात् । चतुर्थेमासि जन्मप्रभृति चतुर्थेऽग्निं तूष्णीं निर्मथ्योपसमाधाय प्रज्वाल्य तस्मिन्नेवाग्नौ पयसि क्षीरे स्थालीपाकं श्रपयित्वा रन्धयित्वा आदित्यः शुक्र उदगादित्येका ऋक् तथा[3] हंसः शुचिषत्तथा यदेदेनमिति त्रिभिः सूर्यस्य जुहुयादित्यर्थः । सूर्यग्रहणं सूर्यपदस्य ग्रहणमृगन्ते स्वाहाकारान्तं कृत्वा जुहुयादित्येवमर्थम् । अथवा मन्त्रवर्णिकी या सूर्यवासिनी देवता तां ध्यात्वा ऋगन्ते स्वाहाकारं कृत्वा जुहुयात् । जुहोति शब्दात् स्वाहाकारप्रयोगः ॥ १ ॥ २ ॥ ३ ॥

उदुत्यम्—उदुत्यमित्यनया मन्त्रलिङ्गादादित्यमेवोपतिष्ठेत । नाग्निमुत्थाय तस्याऽभिमुखंदर्शयेत्तनुमानम्[6]—नमस्तेस्तु अनेन मन्त्रेणादित्यमीक्षयेत्कुमारं यथावन्नोदयति ते[8] नायं भगवान् तमोनुदति अवेक्षणं क्रियंते[10] नमस्ते अस्त्वित्यनेन मन्त्रमत्र कृत्वेक्षणे प्रयुक्तं तच्च न तावत्कुमारः शक्नोति वक्तुं कुमारमपि वाक्येपि त्व(त्वे) तस्मादन्यार्थमेतदेतच्चौ युक्तम् । स्मृत्यन्तरादिदं[12] कर्म

---

१ अथा, क. । २—४—० घ. । ३ तया, क. । ५—६—० घ. । ७—१२ ० घ. ७ च्चो, ख. ग. च. । ८—० क. ख. । ९—१० तमो नवेक्षणे कृत, क. ख. । ११ त्व, क. ।

इति ॥ ४ ॥ अथ ब्राह्मण तर्पणम् ॥ ५ ॥ ऋषभो दक्षिणा ॥ ६ ॥ इत्यूनविंशः खण्डः ॥ १९ ॥

---

[1]दृश्यते चतुर्थे मासीत्यादौ तच्च सर्वदा मन्त्रेण तत्सानवकश्चिमिति न (?) पश्यति । यत्तूच्यते मन्त्रस्यासमवेतार्थत्वं तु यदुक्तं तेनायं कुमारस्य मन्त्रोपि न पितुरत एवेक्षयेदिति णिजन्तः प्रयोगः[2] । तथा दर्शयेदिति अथ किमर्थमीक्षयेदिति दर्शयत्योः ( दर्शयेदित्येतयोः ) समर्थयोरुभयोरुपादानम् । एवमर्थं दर्शयेदित्यनेन तत्कर्मभूतमप्यादित्यस्याभिमुखं दर्शयितव्यम् । आदित्यं च कर्मभूतमीक्षयेदित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥

॥ इति पूरणव्याख्याने एकोनविंशः[3] खण्डः ॥ १९ ॥



---

१—२—० घ. । ३ अष्टादशः, ख. ग. च. ।

# विंशतितमः खण्डः

अथान्नप्राशनम् ॥ १ ॥ पञ्चमे षष्ठे वा मासि पयसि स्थालीपाकं श्रपयित्वा स्नातमलङ्कृतमहतेन वाससा प्रच्छाद्यान्नपतेऽन्नस्य नो देहीति हुत्वा हिरण्येन प्राशयेदन्नात्परिस्रुत इत्यृचा[1] ॥ २ ॥ रत्नसुवर्णोपस्करागयायुधानि[2] दर्शयेत् ॥ ३ ॥ यदीच्छेत्तदुपसंगृह्णीयात् ॥ ४ ॥ ततो ब्राह्मण भोजनम् ॥ ५ ॥ वासो दक्षिणा[3] ॥ ६ ॥ इति विंशः खण्डः ॥ २० ॥

अथान्नप्राशनमित्यादि—अन्नात्परिस्रुतोरसमित्येतयर्चेत्यन्तमेकं महद्वाक्यम् । अथानन्तरमादित्यदर्शनादन्नप्राशनम् । पञ्चमे षष्ठे वा मासीति कुमारसामर्थ्यापेक्षो विकल्पः । यदि बलवत्वा(दा)स्मा[4] पञ्चमे मासि अन्नभोजनाभिलाषो भवति तदा पञ्चमे कुर्यादितरथा षष्ठे । पञ्चमषष्ठग्रहणं च कालनियमार्थं पयसि स्थालीपाकमित्यादि व्याख्यातम् । स्नातमलङ्कृतमिति । स्नानं सर्वौषध्यादिसंयुक्तेन वारिणा । अलंकृतं सुवर्णादिमयेन मुकुटादिना अलंकरणस्योपलक्षणत्वात्स्रगनुलेपनादि कार्यम् । अहतेन नवेन वाससा प्रच्छाद्य प्रावृत्य अन्नपत इत्यनेन स्थालीपाकं चतुरवत्तं कृत्वा पञ्चावत्तं वा जुहोति । अनादिष्टदेवतेष्वग्निमित्यग्निमात्रवर्णितत्वाद्देवताया आदेशनं सर्वत्र चायं (?) न्याय्यं[5] न्यायाद्रष्टव्यम्[6] । यत्र मन्त्रोपदेशस्तत्र मन्त्रवर्णकी देवता न यत्र प्राजापत्यस्थालीपाकमित्यादौ तद्धितेनोक्ता तत्र सैवदेवता यत्र चतुर्थ्यादि निर्दिष्टा अग्नये स्वाहेत्यादौ तत्र सैवं[7] देवता तत्र चतुर्थ्या निर्दिष्टा अत्रानिर्दिष्टदेवतास्थितिर्ज्ञेया[8] हिरण्येन हिरण्मयेन कलापेन भोजयेदित्यर्थः । हिरण्मय्यां च पात्र्यां हविःशेषं ब्राह्मणोऽन्यस्य[9] हविःशेषेणा(न)धिकारात् । अन्नात्परिस्रुतमित्यनेन मन्त्रेण ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ भट्टाष्टावक्रेणैतद्व्याख्यातम्[11-12] ॥

॥ इति पूरणव्याख्याने विंशतितमः[13] खण्डः ॥



१ शाय, ग. । २–३ (    ) क. घ. । ४ श्रा, क. । ५ न्यायः, घ. । ६–९–० घ. । ७ नैव, ख. । ८ ष्टदेवतेत्येषा, ख. । १० ब्रह्मणः, ग. । ब्रह्मण्यो, ख. । ११–१२–० घ. । १३ एकोन, क. ख. ग. ।

# एकविंशतितमः खण्डः

तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयेत् ॥ उदगयने ज्यौत्स्ने पुण्ये नक्षत्रेऽन्यत्र नवम्याम् ॥ १ ॥ जयप्रभृतिर्हुत्वा—

'उष्णेन वायुरुदकेनेद्यजमानस्यायुषा
सविता वरुणोदधद्यजमानाय दाशुषे' ॥

इत्युष्णा अपोऽभिमन्त्रयते ॥ २ ॥

अदितिः केशान्वपत्वाय उदन्तु जीवसे
धारयतु प्रजापतिः पुनः पुनः स्वस्तये ॥

इत्यभ्युन्दति ॥ ३ ॥ ओषधे त्रायस्वैनमिति दक्षिणस्मिन्केशान्ते दर्भमन्तर्दधाति ॥ ४ ॥ स्वधिते मैनꣳहिꣳसीरिति क्षुरेणाभिनिदधाति ॥ ५ ॥

---

तृतीयस्य चूडाः कारयेत् जटा वापयेत्[२] तृतीयस्य वर्षस्य जन्मप्रभृति भूयिष्ठे गते भूयिष्टं बहुतरं षण्मासेभ्यः परं गम्यते षण्मासाः सममेव संवत्सरस्यावयवादधिकं भूयिष्ठं मासाभिप्रायं वा भूयिष्ठं वा। 'उदग' षण्मासमुदगयनं लोकप्रसिद्धं ज्यौत्स्ने उदगयनेऽपि पुण्ये नक्षत्रे अज्यौत्स्नेऽपि। अन्यत्र नवम्यामुदगयनादिषु नवमीं वर्जयित्वेत्यर्थः। अन्यस्तूदगयन ज्यौत्स्ना पुण्य नक्षत्राणां विकल्पश्रवणात्समुच्चयः ॥ १ ॥

जयप्र[३]—आघाराज्यभागादि प्रागुदञ्चं लक्षणमित्यादि कृत्वा प्रधानस्थानेऽनादिष्टदेवतेष्वग्निम्। अन्यस्तु नानु[४] जयप्रभृतीति पठन्ति। तस्मादनादिष्टत्वादग्निरेव भवति युक्तमात्रः पाठो यतो जयादीनां मन्त्राणामुभयलिङ्गदेवताभिधायकत्वं[५] तच्च स्त्रीसंस्कारे युक्तं स्त्रीलिङ्गदेवतात्वात्। इह तु पुंसोधिकाराद्यागेन तैर्होमः। अत एव हि शम्यादिभङ्गे तैर्होम उक्तो दम्पत्योः सहाध्वगमनाद् उष्णेन वा उष्णोदकाभिमन्त्रणम् ॥ २ ॥

---

१—२—० घ.। ३ त्प्र, क. ग. च.। ४—० क. ग. घ.। ५ वि, क.।

येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य केशान् ।
तेन ब्राह्मणो वपत्वायुष्मानयं जरदष्टिरस्तु ॥
येन पूषा बृहस्पतेरिन्द्रस्य चायुषेऽवपत् ।
तेन ते वपाम्यायुषे दीर्घायुत्वाय जीवसे ॥
येन भूयश्चरत्ययं ज्योक्च पश्यति सूर्यः ।
तेन ते वपाम्यायुषे सुश्लोक्याय स्वस्तये ॥

इति तिसृभिस्त्रिः प्रवपति ॥ ६ ॥

यत्क्षुरेण वर्त्तयता सुतेजसा वप्तर्वपसि केशान् ।
शुन्धि शिरो मास्यायुः प्रमोषीः ॥

इति लौहायसं क्षुरं केशवापाय प्रयच्छति ॥ ७ ॥

मा ते केशाननुगाद्वर्च एतत्तथा धाता दधातु ते ।
तुभ्यमिन्द्रो वरुणो बृहस्पतिः सविता वर्च आदधुः ॥

इति प्रवपतोऽनुमन्त्रयते ॥ ८ ॥ सुहृत्परिग्राह[१] हरितगोशकृत्पिण्डे समवचिनोति ॥ ९ ॥

उप्त्वाय केशान्वरुणस्य राज्ञो बृहस्पतिः सविता विष्णुरग्निः ।
तेभ्यो निधानं महतं न विन्दन्नन्तरा द्यावापृथिव्योरपस्युः ॥

---

अदितिः—अनेन केशाभ्युन्दनम् । ओषधे दक्षिणस्मिन्समीपे केशानामित्यर्थः । यत्क्षुरेणानेन केशवापाय नापिताय क्षुरं प्रयच्छेत् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

मा ते केशान्–अनेन प्रवपतो नापितकेशानिति वर्णाद्यद्वा प्रवपतः केशानिति वर्णात् । यद्वा प्रवपतः केशानिति वर्तते–प्रवपतो नापितस्य परिग्रहे परिगृह्य समवचिनोति समवस्थापयति ॥ ८ ॥ ९ ॥

---

१ णेऽ, क. ख. ग. च. ।

**इति प्रागुदीचो ह्रियमाणाननुमन्त्रयते ॥ १० ॥ अरिक्ते पत्न्या श्लेषयेदिति श्रुतिः ॥ ११ ॥ वरं कर्त्रे ददाति पद्मगुडं[१] तिलपिश्लं च केशवापाय ॥ १२ ॥ एतेन तु कल्पेन षोडशे वर्षे गोदानमग्निं वाध्येष्यमाणस्याग्निर्गोदानिको मैत्रायणिरिति श्रुतिः ॥१३॥ अदितिः श्मश्रु वपत्वित्यूहेन श्मश्रु प्रवपति शुन्धि मुखमिति च ॥ १४ ॥ इत्येकविंशः खण्डः ॥ २१ ॥**

उप्त्वाय[२]–अनेन प्रागुदीचो ह्रियमाणान् हरितशकृत्पिण्डेनानुमन्त्रयीत । अरिक्तम्(क्ते)–अरिक्ते धान्यादिपूर्ण इत्यर्थः । आश्लेषयति भरेत शकृत्पिण्डः । साकल्येन स्थापयेत् । श्रुतिग्रहणमादरार्थम् । अन्यस्तु पुनः पुनः श्रुतिग्रहणं कुर्वन् संस्काराणां वेदमूलं स्मरणमिति दर्शयाति ॥ १० ॥ ११ ॥

वरं कर्त्रे–कर्त्रे वरं गाम् । केशवापाय त्वविकलो[३]ल्लं[४]वकात्तृ[५]तीयो भागः पद्मगुण इति केचित् । उक्तावो[६] नित्येकपरो व्यञ्जनावयव इत्यन्ये तिलपिश्लं तिलपिष्टं तिलचूर्णं वा कच्छपकटाहं दद्यात् । श्रुतिग्रहणमनुवर्त्तते ॥ १२ ॥

एतेनैव तु कल्पेन तु शब्दो वाक्यपरिपूरणः । एतेन चूडाकरणकल्पेन विधानेन षोडशे वर्षे जन्मप्रभृति गोदानाख्यः संस्कारः । अत्रायं जन्मप्रभृति पवित्राभिहोमान्ते । उष्णेन वायो इत्यादि तिलपिशलदानं च । अग्निं वा अग्निं युञ्जानकस्थानं यदा अध्येष्यमाणस्यागच्छेत् तदा वा अग्निर्प्रवर्त्तना-त्प्रागुर्ध्वमेव वेत्यनियमः । अत्र प्रमाणमाह—अग्निगोदानिको मैत्रायणिरिति श्रुतिः गोदाने भवो गोदानिकः । गोदानप्रयोजनो वा ॥ १३ ॥

**अदितिः श्मश्रु**–चकार उपलक्षणार्थः । तेन वरुणस्य श्मश्रु वप्तां वपसि मा ते श्मश्रु उप्त्वाय श्मश्रु इति सिद्धम् लाघवार्थमिदमाह गोदानमुक्तं दीक्षासु मध्ये चूडाकरणेन गोदानं व्याख्यातमिति वक्तव्यं स्यात् । इह तु प्रसङ्गादेकार्थमुक्तम् ॥ १४ ॥

॥ **इति पूरणव्याख्याने एकविंशः खण्डः** ॥ २१ ॥



१ णं, ख. । २ उत्थाय, क. । ३ ल्या, ख. ग. च. । ४ ल, ख. ग. च. । ५ त्तु तृ, ख. ग. च. । ६ ण्णावो, ख. । ण्णो, ग. च. । ७ अना, घ. । ८–० ग. च. । ९ प्तिर्, क. । प्तिं, घ. । १० रि, क. ।

## द्वाविंशः खण्डः

[1]सप्तमे नवमे वोपायनम् ॥ १ ॥

आगन्त्रा समगन्महि प्रथममर्तिꣳ युयोतु नः ।

अरिष्टाः संचरेमहि स्वस्ति चरता दिशः । स्वस्त्याग्रहेभ्यः ॥

इत्युप्तकेशेन स्नातेनाक्तेनाभ्यक्तेनालंकृतेन यज्ञोपवीतिना समेत्य जपति ॥ २ ॥ अथास्मै वासः प्रयच्छति—

या अकृन्तन्या अतन्वन्या आवन्या अवाहरन्

याश्[2]ग्न्या देव्योऽन्तानभितोऽततनन्त

तास्त्वा देव्यो जरसे सꣳ व्ययन्त्वायुष्मन्निदं परिधत्स्व वासः ॥

इत्यहतꣳ वासः परिधाप्यान्वारभ्याघारावाज्यभागौ हुत्वाज्यशेषे दध्यानीय दधिक्राव्णो अकारिषमिति दधि त्रिः प्राश्नाति ॥ ३ ॥ को नामासीत्याह ॥ ४ ॥ नामधेये प्रोक्ते "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ हस्तं गृह्णाम्यसाविति हस्तं गृह्णन्नाम गृह्णाति प्राङ्मुखस्य प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नासीनस्य दक्षिणमुत्तानं दक्षिणेन नीचारिक्तमरिक्तेन सविता ते हस्तमग्रहीदसावग्निराचार्यस्तव देवसवितरेषते ब्रह्मचारी त्वं गोपाय समावृतत् । कस्य ब्रह्मचार्यसि । प्राणस्य ब्रह्मचार्यसि । कस्त्वा कमुपनयते । काय त्वा परिददामि । कस्मै त्वा परिददामि । तस्मै त्वा परिददामि । भगाय त्वा परिददाम्यर्यम्णो त्वा परिददामि सवित्रे त्वा परिददामि सरस्वत्यै त्वा परिददा-

---

१ एतद्द्वाविंशतितमखण्डभाष्यं तु अष्टावक्रेणान्ते लिखितं तत्कारणं च दर्शितमिति तदनुसृत्यात्र न लिख्यते घ. पुस्तकेतु सूत्रपाठमनुरुध्य लिखितम् ॥

२ श्र, क. ख. घ. ।

मीन्द्राग्निभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि-सर्वेभ्यस्त्वा देवेभ्यः परिददामीति परिददाति ॥५॥ ब्रह्मणोग्रन्थिरसि स ते मा विस्रसदिति हृदयदेशमारभ्य जपति । प्राणानां-ग्रन्थिरसीति प्राणदेशम् ॥ ६ ॥

ऋतस्य गोप्त्री तपसस्तरुत्री घ्नती रक्षः सहमाना अरातीः
सानः समगन्तमभिपर्य्येहि भद्रे धर्त्तारस्ते सुभगे मेखले मा रिषाम॥

इति मौञ्जीं पृथ्वीं त्रिगुणां मेखलामादत्ते ॥ ७ ॥ युवासुवासा इति मेखलां प्रदक्षिणं त्रिः परिव्ययति ॥ ८ ॥ पुंस स्त्रीन्ग्रन्थीन्बध्नाति ॥ ९ ॥

इयं दुरुक्तात्परिबाधमाना वर्णं पुराणं पुनतीम आगात्
प्राणापानाभ्यां बलमाभजन्ती शिवादेवी सुभगे मेखले मा रिषाम॥

इति तस्यां परिवीतायां जपति—

मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं ते अस्तु
मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्॥इति॥१०॥

यज्ञियस्य वृक्षस्य दण्डं प्रदाय कृष्णाजिनं चादित्यमुपस्थापयति—

अध्वनामध्वपते श्रेष्ठ्यस्य स्वस्त्यस्याध्वनः पारमशीय ।
तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥
पश्येम शरदः शतं जीवेम शरदः शतम् ।
शृणुयाम शरदः शतं प्रब्रवाम शरदः शतम् ।
अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥
या मेधाऽप्सरःसु गन्धर्वेषु च यन्मनः ।
दैवी या मानुषी मेधा सा मामाविशतामिहैव ॥

इति ॥ ११ ॥ अभिदक्षिणमानीयाग्नेः पश्चात्—

एह्यश्मानमातिष्ठाश्मेव त्वँ स्थिरो भव ।
कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ॥

इति दक्षिणेन पादेनाश्मानमास्थापयति ॥ १२ ॥ पश्चादग्नेर्महदुपस्तीर्य सूपस्थलं कृत्वा प्राङासीनः प्रत्यङ्ङासीनायानुवाचयति गायत्रीँ सावित्रीमपि ह्येके त्रिष्टुभमपि ह्येके जगतीमोमित्युक्त्वा व्याहृतिभिश्च ॥ १३ ॥ तां त्रिरवगृह्णीयात्तां द्विरवकृत्य ताँ सकृत्समस्येत् पादशोऽर्धर्चशः सर्वामन्तेन ॥ १४ ॥ यत्तिसृणां प्रातरन्वाह यद् द्वयोर्यदेकस्याः सँ वत्सरे द्वादशाहे षडहे त्र्यहे वा तस्मात्सद्योऽनूच्येति श्रुतिः ॥ १५ ॥ वरं कर्त्रे ददाति काँस्यँ वसनं च ॥ १६ ॥ यस्य तु मेधाकामः स्यात्पलाशं नवनीतेनाभ्यज्य तस्य च्छायायां वाचयेत्—सुश्रवः सुश्रवा असि ।

यथा त्वँ सुश्रवः सुश्रवा असि एवं माँ सुश्रवः सौश्रवसं कुरु ॥
यथा त्वं देवानाँ वेदानां निधिपो असि ।
एवमहं मनुष्याणाँ वेदानां निधिपो भूयासम् ॥

इति ॥ १७ ॥ अधीतेह वा अयमेषाँ वेदानामेकं द्वौ त्रीन् सर्वान्वेति यमेवँविद्वाँसमुपनयतीति श्रुतिः ॥ १८ ॥ व्याख्यातं ब्रह्मचर्यम ॥ १९ ॥ अथ भैक्षं चरते मातरमेवाग्रे याश्चान्याः सुहृदो यावत्यो वा सन्निहिताः स्युः ॥ २० ॥ आचार्याय भैक्षमुपकल्पयते तेनानुज्ञातो भुञ्जीतेति श्रुतिः ॥ २१ ॥

॥ इति द्वाविंशः खण्डः ॥

## त्रयोविंशः खण्डः

अथ दीक्षा चातुर्हौतृकी सꣳवत्सरम् ॥ १ ॥ चतुर्होतॄन्स्वकर्मणो जुहुयात् सह षड्ढोत्रा सप्तहोतारम् ॥ २ ॥ अन्ततो व्रतं प्रदायादितो द्वावनुवाकावनुवाचयेत् ॥ ३ ॥ एवमेवोद्दीक्षां जुहुयात् ॥ ४ ॥

अथ दीक्षाग्निकी द्वादशरात्रम् ॥ ५ ॥ युञ्जानः प्रथमं मन इत्यष्टौ हुत्वाकूतमग्निं प्रयुजꣳ स्वाहेति षड् जुहोति विश्वो देवस्य नेतुरिति सप्तमीम् ॥६॥ व्रतं प्रदायादितोऽष्टावनुवाकाननुवाचयेत् ॥ ७ ॥ त्रिषवणमुदकमाहरेत् त्रीꣳ स्त्रीन्कुम्भान् ॥ ८ ॥

---

अथ दीक्षाग्निकी—अथ शब्दोऽधिकारार्थः । अग्नि वाध्येष्यमाणस्येति प्रसंगादाग्निकी दीक्षाऽभिधीयते ॥ चातुर्हौत्रि(तृ)क्यनन्तरं वक्तव्या स्यान्नतूपनयनं तावद्वक्तव्यम् । उपनीतस्याह्यध्यायार्था[2] दीक्षा अध्यापन[3]पाठकालेषु स्युरिति गोदानप्रसङ्गेनोच्यते । दीक्षामौ[4]ञ्ज्ये[5]नापि च रूपम् इज्योपनयननियमव्रतादेशेषु दीक्षोच्यते द्वादशरात्रमिति कालनियमः ॥ ५ ॥

युञ्जानः प्रथमं मन इत्यादि पञ्चदशाहुतीर्जुहोति ॥ ६ ॥

व्रतं प्रदाय वक्ष्यमाणं त्रिषवणादिकम् । आहरणादि तद्व्रतमादिश्याष्टौ युञ्जानकादीननुवाकान्वाचयेत् ततः केचित्प्रधानस्थाने युञ्जानादिहोममभिच्छन्ति । समिच्छेषे वा वचनं व्रतं प्रदायेति व्रतपते इति दर्शपौर्णमासवत् त्रिषवणमुदकाहरणं त्रिभिर्घटैः । एकवस्त्रं शयनकालार्थम् । अन्यदा द्विवस्त्रोत ऊर्ध्वमिति (१-२-१७) नियमात्सिद्धम् । अनन्तर्हितभूमिशयनं भस्मकरीषविकारमन्यतमस्मिन्वा ? नोदकमभ्यवेयादुदकाहरणकाले प्राप्तौ पुनर्वचनं निषेधार्थम् ।

---

१ इयं चातुर्हौत्रि(तृ)की दीक्षा भाष्यकारेणाश्वमेधिक्यनन्तरं लिखितेति तथा लिखिष्यते । २ योर्थो, क. ख. ग. च. । ३ पन=य, ख. घ. च. । ४–५ मण्डपे अस्मादकारप्रत्यय, ख. ग. च. ।

**एकेन वाससान्तर्हितायां भूमौ शयीत भस्मनि करीषे सिकतासु वा ॥९॥ नोदकमभ्यवेयात् ॥१०॥ समाप्ते घृतवतापूपेनेष्ट्वा वात्सं प्रवाचयेत् ॥११॥ ततो घृतवद्भिरपूपैर्ब्राह्मणान् भोजयेत् ॥१२॥ एवमेवोदीच्यां जुहुयात् ॥ १३ ॥**

**अथ दीक्षाश्वमेधिकी द्वादशरात्रम् ॥ १४ ॥ वैतसमिध्ममुपसमाधाय नवमेनानुवाकेन हुत्वा षष्ठेनोपस्थाप्य व्रतं प्रदायादित एकविंशत्यनुवाकाननुवाचयेत् ॥ १५ ॥ त्रिषवणमश्वस्य घासमाहरेत् त्रीँ स्त्रीन्पूलान् ॥१६॥ एकेन वाससाऽनन्तर्हितायां भूमौ शयीत भस्मनि करीषे सिकतासु वा ॥ १७॥ या ओषधयः**

---

तेनान्यत्र निषिद्धे यद्विधेयानुष्ठानसामर्थ्यादनुष्ठीयमाने न तत्र दोषः समाप्ते द्वादशाहे गते । घृतवतापूपेनेष्ट्वा वात्सं[2] प्रवाचयेत् ॥ इष्ट्वेति स्थालीपाकधर्मेणेति दर्शयति अत्रेमं[3] च पुरोडाशं लोष्ठवदङ्गारेषु श्रपयेत् । पात्र्यामुपस्तीर्योद्वास्यालंकृत्य तत इमं स्तोमादि पवित्राभिहोमान्ते दिवस्परीति वाचयेत् । ततो घृतवद्भिरपूपैर्बहुवचनात्त्रीन् भोजयेत् अपूपा वा घृतपूता मण्डका वा व्रतविमोके केचित् अग्ने व्रतपते व्रतमचार्ष(रिष)मिति वात्सप्राप्तमिच्छन्ति ॥७॥ ८॥९॥१०॥११॥१२॥१३॥ (पूरण व्याख्याने एकविंशतितमः खण्डः)

**अथ दीक्षाश्वमेधिकी**-अश्वमेधावस्थापनं तदध्ययनं प्रयोजनं यस्याः साऽश्वमेधिकी वैतसमि वैतमिध्ममुपसमाधाय नवमेनानुवाकेनायुषे स्वाहेति हुत्वा षष्ठेनोपस्थाप्य आब्रह्मन्नित्यनेन व्रतं संप्रदाय केचित्प्रधानस्थाने इच्छन्ति समिच्छेषे व्रतं प्रदायाग्ने व्रतपत इतिवत् ॥ १४ ॥ ॥ १५ ॥

**त्रिंषवणमश्वस्यानुघासाहरणं** त्रिभिस्त्रिभिर्भारैरेवं च तावत्कृत्वो दिवसस्य घासाहरणं स्यात् । न हि त्रयो भारा देवैरपि सकृदानेतुं शक्यन्ते । यावदेवानीयते तावति भार इति चतुर्भिरनुवाकैः स्नानं संत्रान्तेन सकृद्यदि स्नायाद्दण्ड

---

१ त्सप्रं, क. घ. । २ त्सप्रं, ग. घ. च. । ३ अपूपं, घ. । ४ प्रमिच्छ, क. घ. । वात्सप्तामि, ग. च. । ५ (        ) ० घ. । ६-७ ० ख. घ. । ७ वैतस मिधा, क. । ८ न इति, ग. च. । ९ स, घ. । १० मन्, क. घ. ।

समन्यायन्ति पुनन्तु मा पितरोऽग्नेर्मन्व इति चतुर्भिरनुवाकै-रपोभिमन्त्र्य स्नानमाचरेत् ॥ १८ ॥ एवमेवोद्दीक्षां जुहुयात् ॥ १९ ॥ शादं दद्भिरिति चतुर्दशानुवाकाननुवाचयेत् ॥ २० ॥

रहस्यमध्येष्यमाणः प्रवर्ग्यम् ॥२१॥ आदेशे यथा पुरस्ता-द्व्याख्यातम् ॥२२॥ आदितः पञ्चविंशत्यनुवाकाननुवाचयेत् ॥२३॥

त्रैविद्यकमुपनयनेन व्याख्यातम् ॥ २४ ॥ आदितस्त्रीननु-वाकाननुवाचयेत् ॥ २५ ॥ व्याख्यातानि व्रतानि व्याख्यातानि व्रतानि ॥ २६ ॥ उदुत्तमं वरुणपाशमिति मेखलामुन्मुञ्चति ॥ २७ ॥

इति मैत्रायणियमानवगृह्ये त्रयोविंशः खण्डः प्रथमः पुरुषश्च समाप्तः ॥

---

इवेत्युक्तत्वात् (१-१-१४) अश्वस्यैव स्नानं प्रकृतव्रतेनाश्वं स्नापयेदित्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥

एवमेवोद्दी-केचिदुपस्थानं नेच्छन्ति तदसदेवमेवेत्यतिदेशस्याङ्गप्रधा-नत्वात्-हुत्वा षष्ठेनोपातिष्ठते ॥ १६ ॥

शादं दद्भिरिति नव अनोमित्रेति पञ्च एवं चतुर्दशानुवाकोपस्थानस्य होमसंबन्धत्वात् । केचिच्छमिच्छेषे अग्ने व्रतपते व्रतमचारिषमिति व्रतविमोकमि-च्छन्ति शादं दद्भिरिति नव मानोमित्रेति पञ्च चतुर्दशा नुवाकान्वाचयेत् ॥२०॥

पञ्चविंशत्येवाघार एवमेवेति प्राप्ते रहस्यं येन प्रकारेण पुरस्ताद्व्या-ख्यातम् । उदगयन इत्यादिना दीक्षामुपैष्यन्नित्यादि वा तत्रैव सिद्धम् ॥ २१ ॥ २२ ॥ २३ ॥

त्रैविद्यकमुपत्रैविद्यकं तन्न दीक्षाविशेषः । तिस्रो विद्याध्ययनं त्रैविद्यकं कर्म तदुपनयनेन व्याख्यातम् । आगन्त्रा समगन्महीत्यादिना समिच्छेषे व्रतमादि-श्यादितस्त्रीननुवाकान्वाचयेत् । करिष्ये स्थानि व्रतानि इत्याह ख्यातानि व्रतानि एवं वा अनन्तर्हितायां भूमौ शयनादीनि उदकघासाहरणं वर्त्तयित्वा । अन्ये तु मार्गवासस्त्वादीनि व्रतानि मन्यन्ते तदसत् तानि हि समावर्त्तनान्तानि एतेन धर्मेण साध्वधीत इति (१-२-७) उक्तत्वात् । तेषां त्रैविद्यकत्वे त्रैविद्यकं यावदेव

---

१-० ख. । २ तत्र, क. । ३ ताव, ग. च. । ४ करिपु नस्यानि, क. ।

चरणं स्यात् । कियन्तं परं कालं त्रैविद्यकं च कदा न चरेत् उच्यते उपनयनयनानन्तरं त्रैविद्यकं चरेत्, त्रैविद्यकं च चरेदिति तत्काले श्रवणात् कालं त्वानन्तर्याद्रहस्यदीक्षोक्तं वा संवत्सरं त्रीन् पञ्च सप्त वेति द्वादशरात्रं वा आश्वमेधिकं संबध्यते । एवमेवोद्दीक्षाव्रतग्रहणाद्विमोकः स्यात् । उपनयने दीक्षा च व्याख्याता द्वावनुवाकानिसारीमेवं ? ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

अथ दीक्षां चातुर्होतृकीमाह—( सूत्रम् पु. १ खं. २३ सू. १–४ अथ दीक्षा चातुर्होतृकी संवत्सरम् ॥ १ ॥ चतुर्होतॄन्स्वकर्मणो जुहुयात् सह षड्ढोत्रा सप्तहोतारम् ॥ २ ॥ अन्ततो व्रतं प्रदायादितो द्वावनुवाकावनुवाचयेत् ॥ ३ ॥ एवमेवोद्दीक्षां जुहुयात् ॥ ४ ॥ ) संवत्सरमिति कालनियमः । चतुर्होतारः प्रयोजनं यस्याः सा चातुर्होतृकी चतुर्होत्रा स्वकर्मणो जुहोति । षड्ढोत्रा दशहोतारं निगद्य इन्द्रं गच्छ स्वाहेति होमः । चतुर्होतारं निगद्य वाचस्पते सोमः सोमस्येति द्वौ होमौ । पञ्चहोतारं निगद्य वाचस्पते हिन्विधे सोमः सोमस्येति होमम् (मः घ.) । सप्तहोतारं निगद्य विधे[3] नामन्निति[4] होमवाग्[5] होतेति षड्ढोतारं[6] निगद्य तपयसि जुहोमि[7] स्वाहेति होमः । एतत्सूत्रं[8] पठितं स्या(तस्यो) परि पूर्वोक्तं जुहुयात् । सप्तहोताऽग्निर्होता महाहविर्होता यथाक्रमं दश चतुः पञ्च षड् होतृशब्दास्ताश्चित्तिस्रुगादीनां संज्ञा समिच्छेषे व्रतं युक्तं द्वावनुवाकौ वाचयेत् । एवमेवोद्दीक्षाया होमो वा चरि[9]तव्रतान्युक्तानि द्वादशरात्रमित्यत्र संवत्सरं यावत् । एतच्च मन्त्रहोत्राध्ययनकाले कर्तव्यम् । अग्निहोत्राध्ययनकाले– कर्त्तव्यम् । अग्निहोत्रब्राह्मणमधीत्य चातुर्होतृकं चत्वारि चत्वारि संवत्सरान्ते उद्दीक्षते तच्चतुर्होतारं स्थानमध्येतुमारभेत । एवमग्निमित्यादौ द्वादशरात्रादनन्तरमत्पारमुपस्तीर्णव्रतविकारात् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ( पूरं[10]णव्याख्याने द्वाविंशतितमः खण्डः[11] )

गोदानप्रसङ्गेन चूडाकरणानन्तरमेवमेवोपनयनखण्डं पठति तत आग्नेयादीक्षा तत आश्वमेधिकी ततश्चातुर्होत्रिकी[12] ततस्त्रैविद्यकम् । एतस्मिन्क्रमे सूत्रकारस्यायमभिप्रायः । यदाग्नेयीत्वाद् ब्राह्मणस्यादौ तावदाग्नेयं स्थानं पठितव्यम् । क्षत्रियेण त्वाश्वमेधिकम् । अध्ययनं द्वादशवर्षब्रह्मचर्याचरणेऽसाम-

१–२–० घ. । ३ धेय, ख. ग. च. । ४ ति होमः, घ. । ५ न्, ख. ग. च. । ६ र मग्निगम्य तपयसि, ख. ग. च. । ७ होमे, ख. ग. च. । ८ त्र, ख. ग. च. । ९ याचरिता, ग. च. । १०–११–० घ. । १२ र्होतृकी, घ. ।

(सप्तमे नवमे वोपायनम् ॥ १ ॥

आगन्त्रा समगन्महि प्रथममर्त्तिं युयोतु नः ।

अरिष्टाः संचरेमहि स्वस्ति चरतादिशः । स्वस्त्याग्रहेभ्यः ॥

इत्युप्तकेशेन स्नातेनाक्तेनाभ्यक्तेनालंकृतेन यज्ञोपवितिना समेत्य जपति ॥ १-२२-२ ) ( अथास्मैवासः प्रयच्छति-

या अकृन्तन्या अतन्वन्या आवन्या अवाहरन् ।

याश्च ग्ना देव्योऽन्तानभितोऽततनन्त ॥

---

थ्यीन्न भवति। यदायमनुकल्पो यदि द्वादशरात्रमाग्नेयी दीक्षा ब्राह्मणेनावश्यं तथा राजन्येनाश्वमेधिकी । अत एव चातुर्होतृकी पश्चादुक्ता आभ्यस्त्रैविद्यकादयश्च तत एव संवत्सरमवश्यं व्रतचारिणा भवितव्यम्। इत्यष्टावक्रेण मयोक्तमिदानीं प्रकृतं लिख्यते—( एवं संगतिं प्रदर्श्य क्रमप्राप्तं द्वाविंशतितमखण्डोक्तमुपनयनं व्याख्यातुमुचितं मन्यमानोऽष्टावक्रो द्वाविंशतितमखण्डं व्याचष्टे सप्तम इत्यादि मूलं पूर्वं लिखितमपि सुखबोधायार्द्धचन्द्र पुनः प्रदर्श्यते )

सप्तमे वर्षे नवमे वा जन्मप्रभृति वर्षस्येति वर्त्तते तृतीयस्य वर्षस्येत्यतस्तदिह सप्तम्यन्तं संबध्यते सप्तम इति सप्तम्यन्तेन संबन्धात्। यदिह सप्तम्यस्येत्युच्येत भूयिष्ठे गतेऽत्रापि स्यात् तन्निवृत्त्यर्थं सप्तमीनिर्देशः । उपनयनपर्याय उपायनम् ॥ १-२२-१ ॥

आगन्त्रा समिति जपित्वा माणवकेन संगत्योप्तकेशेनेत्यादि केशवपनं स्नानं ततोऽञ्जनमक्ष्णोः । अभ्यञ्जनं नवनीतेन मुखाद्यङ्गानाम् । अलंकरणमङ्गुलीयकादि । यज्ञोवीतमिहसूत्रकं वाससः प्रतिनिधिभूतयज्ञोपवीतस्य ॥ १-२२-२ ॥

वासो विन्यासविशेषत्वात्तद्यदुद्विवस्त्रोऽत ऊर्ध्वमिति निषेधात्। यत्प्रयतेतेति वासोऽहतं परिधापयति परिधापनं परिधत्स्वेति प्रेषणमाचार्यकर्त्तृकं परिधापनं च शिक्षयितव्यम् । अन्वारभ्याघाराज्यभागौ हुत्वा । अन्वारभ्यग्रहणात्पूर्वं संस्कारेण चूडाकरणान्तेषु प्रयोग्यत्वादन्वारम्भो नास्तीति गम्यते

---

१ त्या उ, क. ख. ग. च. ।

**तास्त्वा देव्यो जरसे सꣳ व्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥ इत्यहतꣳ वासः ॥ ) ( पु. १–२२–६–७–८–९ )**

विवाहेन्वारम्भस्य तत्वधर्मतोक्ता ( १–१०–८ ) आज्यशेषे अन्वारभ्याघाराज्यभागौ हुत्वाऽनन्तरं तदध्यापनं प्राप्नोति आनन्तर्यात् । नैष दोषः । आघाराज्यभागहोमस्य तन्त्रसूचकत्वात् तेन प्रागुदंश्वमित्यादि द्रष्टव्यम् । प्रधानस्थानेऽग्निं येन च कर्मणेच्छेदिति जपश्चोपवित्राभिहोमान्ते च शेषे दधिक्रावण इति दधि प्राशयति । आचार्यो हि कर्त्ता प्राशयेदित्यर्थः । अन्यस्तु सविता ते हस्तमग्रहीदित्यनेन मां देवस्य त्वेति हस्तं गृह्णंस्तमसौस्थाने नाम गृह्णाति संबुध्यन्तं प्राङ्मुख ऊर्ध्वस्तिष्ठन्नासीनस्य दक्षिणेन दक्षिणमरिक्तेनारिक्तम् । सविता ते हस्तमित्यादि परिदानान्तम् । सविता ते(हस्तमि)त्यादिना परिददाति सर्वेभ्यो भूतेभ्यो ब्रह्मचारिणम् । अन्यस्तु सविता ते हस्तमग्रहीदित्यनेन मन्त्रेण ब्रह्मण्य न्यायेन सवितारं ध्यायेत् तदात्मन्यसावग्निरिति चाग्निं देवसवितरित्यादिना सवित्रे परिददाति ब्रह्मचार्यसीत्यादिना ब्रह्मचर्येण प्रजापतिं ध्यायेत् । काय त्वा परिददामीत्यादिना प्राजापत्यादिना देवानां परिददाति ॥ पु. १ खं. २२ सू. ३–४–५ ॥

ब्रह्मणो हृदयदेशमारभ्यानेन ब्रह्मचारिणो जपति मन्त्रवर्णादाचार्यः प्राणानां ग्रन्थिः प्राणादिदेशे तस्यैव ऋतस्यैव ॥ १–२२–६ ॥

ऋतस्य अनेन मेखलां मौञ्जीं पृथ्वीमादत्ते मौञ्जीग्रहणमनुवादः सप्तमुञ्जामिति सिद्धेः । पृथिवे(वी)तिकालात्रिगुणां त्र्यवयवाम् ॥ १–२२–७ ॥

ब्रह्मचारी–आदत्ते युवा अनेन परिव्ययति कटिदेशं परिवेष्ट्य परिवेष्ट्य ग्रन्थिं करोति । पुंस इति नपुंसकनिवृत्यर्थः । नपुंसकस्य न भवति । अन्ये तु ग्रन्थिविशेषणं शब्दमाचक्षते । वेष्टितान् ग्रन्थीन् वत्सपाशान्करोति । ब्रह्मचारी आदानसंबन्धात् ॥ पु. १ खं. २२ सू. ८–९ ॥

---

१ तद्ध्यानयनम्, घ. । तदध्याचमनम्, क. । २ दीक्ष्या, ख. ग. च. । ३ नयश्चोपरि, ख. ग. च. । ४ शिष्यो, ख. ग. च. । ५–६–० घ. । ७ तिरि, क. । ८ तिरि, ख. । ९ ब्राह्मन्न्या, ग. । ब्राह्मण्येन, घ. । १० वा, क. । ११ नादेशं, घ. ख. । १२ दं, क. ख. ग. च. । १३ काला, ० घ. । १४ णे, ख. ग. च. । १५ वे, ख. ग. च. । १६–१७–० घ. ।

(इयं दुरुक्तात्परिबाधमाना वर्णं पुराणं पुनतीम आगात् ।
प्राणापानाभ्यां बलमाभजन्ती शिवा देवी सुभगे मेखले मा रिषाम।
इति तस्यां परिवीतायां जपति—
मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं ते अस्तु
मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्॥इति॥१०।
यज्ञियस्य वृक्षस्य दण्डं प्रदाय कृष्णाजिनं चादित्यमुपस्थापयति—
अध्वनामध्वपते श्रेष्ठस्य स्वस्तस्याध्वनः पारमशीय ।
तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥
पश्येम शरदः शतं जीवेम शरदः शतम् ।
शृणुयाम शरदः शतं प्रब्रवाम शरदः शतम् ।
अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥
या मेधाऽप्सरःसु गन्धर्वेषु च यन्मनः ।
दैवी या मानुषी मेधा सा मामाविशतामिहैव ॥
इति ॥ ११ ॥ अभिदक्षिणमानीयाग्नेः पश्चात्—
एह्यश्मानमातिष्ठाश्मेव त्वꣳ स्थिरो भव ।
कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ॥

---

इयं दुरुक्तामिति परिवीतायां जपति । ब्रह्मचारी मन्त्रलिङ्गात् । मम व्रत इति हृदयमित्याचार्यो जपति । [1]एतस्मादेव मन्त्रलिङ्गादाचार्यकाम उपनयते दर्विहोमे चेदुपनेता मन्त्रलोपः स्यात्[2] । पिता वा जपेत् । यज्ञियकस्या[3]प्रावृचारी (?)। ब्रह्मणो बैल्वपालाशाविति (म. २–४५) स्मृतौ विशेषपरिग्रहः । केशान्तिक (म. २–४६) इत्यादि चाविरोधात् । उपस्थानाभिवादनमाचार्यस्याभिधत्ते । अध्वनामित्यादिना ॥ ( पु. १ खं. २२ सू. १०–११ )

अभिदक्षि–आत्मदक्षिणे सामर्थ्यादेह्यश्मानमातिष्ठेति दक्षिणेन पादेनाश्मानमास्थापयति ब्रह्मचारिणं [4]पादेनेति इत्थंभूतलक्षणे तृतीया । अन्यत्–

---

१–२–० घ. । ३ यस्य, क. । ४–० घ. ।

( इति दक्षिणेन पादेनाश्मानमास्थापयति ॥१२॥ पश्चादग्नेर्महदुपस्तीर्य सूपस्थलं कृत्वा प्राङासीनः प्रत्यङ्ङासीनायानुवाचयति गायत्रीꣳ सावित्रीमपि ह्येके त्रिष्टुभमपि ह्येके जगतीमोमित्युक्त्वा व्याहृतिभिश्च ॥ १३ ॥ तां त्रिरवगृह्णीयात्तां द्विरवकृत्य ताꣳसकृत्समस्येत् पादशोऽर्धर्चशः सर्वामन्तेन ॥ १४ ॥ यत्तिसृणां प्रातरन्वाह यद् द्वयोर्यदेकस्याः सꣳवत्सरे द्वादशाहे षडहे त्र्यहे

(न्ये)तु ब्रह्मचारिणोऽवयवेन द्वितीया वा स्यात्तृतीया वा। गतिबुद्धिप्रत्यवसानार्थशब्द ( पा. १-४-५२ ) इत्यादिना कर्मसंज्ञा अवस्थापनाश्मन उपरि चलनात्मकत्वाद्गत्यर्थत्वान्नोचेत्तृतीया ब्रह्मचारिणेति पादे तु इत्थं भूतलक्षणे तृतीया नह्याचार्यस्य स्वकीयः पादः। अवस्थाप्यते येनकरणे तृतीया स्यात्[१]। केचिदभिदक्षिणमानयनमश्मन इच्छन्ति । एवं च द्विकर्मकत्वे सति कर्मण्येव द्वितीया ॥ ( पु. १ खं. २२ सू. १२ )

पश्चाद्-निगदसिद्धं महदुपस्तरणमाचार्यब्रह्मचारिणोः सूपस्थलमाचार्यस्य ब्रह्मचारिणः सकाशादुच्चतरं कृत्वा गायत्री तदित्यादिकारक सावित्री देवतात्मैव[२]। अपि चैक इति वचनाद् गायत्री राजन्यवैश्ययोः स्यात् पक्षे अस्तु गायत्रीं सावित्रीमपीत्यत्रापिहीतिनिपातसमुदायम(यो ऽ)वधारणार्थम् । गायत्रीमेवैकेन राजन्यो जगतीमेव एके वैश्य इति । अत एव प्रागुक्तमादेवोयातीति त्रिष्टुभं राजन्यो युञ्जत इति जगती वैश्य इति ॥ (पु. १ खं. २२ सू. १३)

पच्छोऽर्धर्चश इति अस्य व्याख्यानं तां त्रिरित्यादिः[४]। अवग्रहोऽवच्छेदः। एवं च त्रिष्टुब्जगतीश्चतुरवगृह्णीयात् पच्छ इत्यपि सिद्धम् ॥ ( पु. १ खं. २२ सू. १४ )

सावित्रीग्रहणं त्रिष्टुब्जगत्योरपि विशेषणम् । संवत्सरे यदित्यनुवादार्थं विशेषणार्थं च गायत्र्याद्यैः सन्ध्या या गण उक्ता तिसृणां प्रातरन्वाह यद्द्वयोर्यदेकस्याः संवत्सरे यदित्यनुवादार्थं विध्यभावात्तिसृणां रात्रीणां द्वयो रात्र्योरेकस्याश्च प्रातरन्वाह वत्सरे च गते यदनुवचनमुपनयनानन्तराश्चतुर्षु कालेषु

१-० घ. । २ तत्संबन्धा, ग. च. । ३ त्रिष्टुभं ज, ग. च. । ४ भाग इति शेषः । ५ द्य, ग. घ. ।

(वा तस्मात्सद्योऽनूच्येति श्रुतिः ॥१५॥ वरं कर्त्रे ददाति काꣳस्यꣳ वसनं च ॥१६॥ यस्य तु मेधाकामः स्यात्पलाशं नवनीतेनाभ्यज्य तस्य छायायाꣳवाचयेत् ।

सुश्रवः सुश्रवा असि

यथा त्वꣳ सुश्रवः सुश्रवा असि एवं माꣳ सुश्रवः सौश्रवसं कुरु ॥
यथा त्वं देवानाꣳ वेदानां निधिपो असि ।
एवमहं मनुष्याणाꣳ वेदानां निधिपो भूयासमिति ॥ १७ ॥

---

ततोऽनुगम्यते तस्मात्सद्योऽनूच्येति श्रुतिः सद्यः काले एवानूच्येति श्रुतिराहेत्यर्थः । अन्यस्त्वाह यत्तिसृणां प्रातरन्वाह यद् द्वयोर्यदेकस्याः संवत्सरे द्वादशाहे यदन्वाह तिसृणामित्यादि द्वादशरात्रिपर्यन्ताः पञ्चकल्पाः । एषु पञ्चकल्पेषु यदन्वाह तत्प्रातरेवान्वाह नान्यस्मिन्वा काले इत्यर्थः । तस्मात्सद्यस्तस्मिन्नेवकाले ब्रूयादिति श्रुतिर्वाद आहेत्यर्थः । अनेनैव तदाह पूर्वे कल्पा न वेदमूलास्तस्मात्ते नादर्तव्याः ॥ ( पु. १ खं. २२ सू. १५ )

वरं कर्त्रे–कर्त्तारमादि[3] होमी तस्मै दद्याद्वरादि यदात्वाचार्यः कुर्यात्तदा वरादि दातव्यमुत नेति दातव्यमदृष्टार्थं वेति केचित् । कर्तृग्रहणे तु दातव्यमित्याह अष्टावक्रः । यथा सत्रेषु होत्रादीनां दक्षिणादानं न भवति तथा[5]चार्यकर्त्तृके उपनयने यस्मात्प्रधानमिहं संबन्ध (:) सत्रेष्विवात्रापि तथा पितृकर्त्तृके दूरापेताम् । एवं च सामर्थ्यात् पितुराचार्येचा(र्यत्वा)सम्भवादन्यैः कारयितव्यैः ॥ ( पु. १ खं. २२ सू. १६ ) १६ ॥

यस्य तु मे[8]धाकामः पलाशवृक्षसंज्ञातो नवनीतेनाभ्यज्य तस्य[9] छायायां यस्य वै ब्रह्मचारिणो मेधां कामयेत तमाचार्यो वा[10]दयन् सुश्रवः एतन्मन्त्रं वाचयेदित्यर्थः । अमेधाकामस्य नैतद्भवति । अन्यस्तु सं[11]र्ववाचनमिच्छति[12] । यतो ब्रह्मवर्चसं वा ज्ञेयं स्वर्गं च यथा सर्वः कामयते तथा ब्रह्मवर्चसमपि । अथ वा पालाशदण्डसंबन्धाद्ब्राह्मणस्यैव वाचनं सावित्र्यनुवाचनानन्तरं केचिदिच्छन्ति तदयुक्तं दक्षिणादानोत्तरकाले विधानात् ॥ (पु. १ खं. २२ सू. १७)

---

१ ० ख. ग. घ. च. । २ र्वे, ख. ग. च. । ३ वि, ख. ग. च. । ४ ति, घ. । ५–७–० घ. । ६ न्येन, ख. ग. च. । ८–९–० घ. । १० वाचयेत्, क. । ११ सर्वे, ख. । १२ न्ति, ख. ।

**( अधीतेह वा अयमेषाꣳ वेदानामेकं द्वौ त्रीन् सर्वान्वेति यमेवꣳ विद्वाꣳसमुपनयतीति श्रुतिः ॥ १८ ॥ व्याख्यातं ब्रह्मचर्यम् ॥ १९ ॥ अथ भैक्षं चरते मातरमेवाग्रे याश्चान्याः सुहृदो यावत्यो वा सन्निहिताः स्युः ॥ २० ॥ आचार्याय भैक्षमुपकल्पयते तेनानुज्ञातो वा भुञ्जीतेति श्रुतिः ॥ २१ ॥**

---

**अधीते** वायमेषां वेदानामेकं द्वौ त्रीन् सर्वान् वा वाशब्दः प्रत्येकमभिसंबध्यते वेति । अयं ब्रह्मचारी–अधीते अयं ब्रह्मचारी एवं विद्वानाचार्य उपनयति मात्रात इत्यादि मन्त्रणं परामृश्यते श्रुतिगर्भार्थः । अनुपनीतोनाधीते व्रात्यत्वात् । अन्यस्तु मन्त्रान्ते वेदानां निधिपो भूयासमस्मिन् यद्वेदस्येत्येव वचनम् । तत्रायमूहः कूर्यादेतस्य वेदस्य द्वयोर्वा वेदयोस्त्रयाणां वा वेदानां सर्वशब्दात्सकलवेदानामिति ॥ ( पु. १ खं. २२ सू. १८ )

**व्याख्यातं ब्रह्मचर्यम्** । एतेन धर्मेण द्वादशमित्यादिना ॥ ( पु. १ खं. २२ सू. १९ )

**अथ भैक्षचर्यां चरति** । अथ शब्द उपनयनादनन्तरं भैक्षार्थं चरतीति ब्रूते तदुक्तम्–उपनयनप्रभृति व्रतचारी स्यादिति (१–१–७) भैक्षाचार्यवृत्तिरिति । अन्यस्तु वेदवचनानन्तरं भैक्षचरणेन तु यथान्येषामुपनयनात् पूर्वमित्यथ शब्दः । मातरमेवाग्रे मातरमग्रे याचेदित्यर्थः यश्चान्याः सुहृदो यावत्यो वा संनिधाः स्युः । यावत्यो वा सुहृदः स्युर्भगिन्याद्याः संनिधाने कृता अग्रे याचेत । एतच्च मातुरभावे ज्ञेयम् । यदात्वाचार्य उपनयनं स्वग्रहे कुरुते तदा मातृतुल्यामाचार्यानीम् ॥ ( पु. १ खं. २२ सू. २० )

**आचार्याय** भैक्षमुपकल्पयते । आचार्याय निवेदयते भैक्षं तेनानुज्ञातो भुञ्जीत नानुज्ञाप्याचार्यं भुञ्जीत त्रैविद्यमुक्तम् ॥ ( पु. १ खं. २२ सू. २१ )

॥ इति पूरणव्याख्याने त्रयोविंशतितमः खण्डः ॥ २३ ॥

॥ प्रथमपुरुषश्च समाप्तः ॥



श्रीरस्त्वत्र ।

द्वितीयः पुरुषः ।

# मैत्रायणीयमानवगृह्यसूत्रभाष्यम् ।

सरस्वत्याः प्रसादेन यथैतत्कृतवान्पुरा ।
भगवान् मानवाचार्यः पूरणाख्यं प्रयत्नतः ॥ १ ॥
अष्टावक्रेण देवेन तां तुष्ट्वा तु सरस्वतीम् ।
शते पूर्णे तु वर्षाणामृतौ शिशिरसंज्ञिते ॥ २ ॥
नमस्करोमि तां देवीं यस्या एव प्रभावतः ।
प्राप्तं यत्तन्महत्पुण्यं बृहद्धर्माभिधायकम् ॥ ३ ॥
नमोऽस्तु तस्मै देवाय स्वामिने चक्रपाणये ।
यस्य प्रसादाद् भूतानि गच्छन्ति पदमव्ययम् ॥ ४ ॥
ययानुविद्धो लोकेर्थो भाति कृच्छ्र(त्स्नः) चराचरे ।
नत्वा सरस्वतीं चैव तत्र यज्ञान् ब्रवीम्यथे ॥ ५ ॥

॥ स्वस्ति ॥ उद्वाहिकम् । प्रथमेऽध्याये धर्मेणाधिगतवेदस्य भार्यावेदनमुक्तम् । विन्नभार्यश्चेत्प्रजोत्पत्तावधिक्रियते स्नात्वा स सर्वं विन्दत इति वचनात् । तदनु गर्भाधानादयोऽपत्यसंस्कारा उक्ताः । जातापत्यः सत्क(न्क)मेण्यधिक्रियते श्रौते तथा चोक्तं "जातपुत्रो ब्राह्मणः कृत्तिकास्वादधीते"ति । एवं गार्ह्येऽपि सूत्रक्रमात् पण्ढस्यानधिकारात् । औद्वाहिकेपि पण्ढस्यानधिकारः । उद्वाहस्तु तस्य च दृश्यते मनु(९—२०३)वचनात्—

" यद्यर्थिता तु दारैः स्यात् क्लीबादीनां कथं च नेति "

एतस्मादेव दाराधिगमवचनात् । श्राद्धभोजननिषेधाच्च क्लीबादीनामध्ययनयोगो विद्यते । यस्तु चिकित्स्यः क्लीबो वाऽन्तरितप्रभृतिजातापत्योऽप्यसावधिक्रियते सोमो(मे) " पौष्णं नपुंसकमालभेत पुण्डकं याजयेदिति " श्रुतेः । गार्ह्यकर्मवान् श्रौतेऽधिक्रियते प्राथम्यान्नित्यत्वाच्च । तच्च गार्ह्यं कर्म शालाग्निसाधनमतः शालाग्न्याधानं तावदभिधीयते—

१—२ ० घ. । ३—४ ० घ. । ९ उद्वाह, च. । ६—७ ० घ. ।

**औद्वाहिकं प्रेतपिता शालाग्निं कुर्वीत ॥ १ ॥ अन्यत्र ततः**

'**औद्वाहिकम्**' उद्वाहो विवाहः । उद्वाहेन निर्वृत्त औद्वाहिकस्तं शालाग्निमावसथ्यं कुर्वीत समर्थयेदिति। एतदुक्तं भवति 'औद्वाहिकं शालाग्निकार्ये विनियुञ्जीतेति'। उक्तं च तस्मिन् भार्यामुद्वहेत्स शालाग्नि[रु]द्वाहदेशाग्निरिति। एष उपवसथोऽग्निर्वैवाहिको वेति काठकं पाणिग्रहणादि गृह्यविहितं परिचरेदिति व्याहृत्यमौद्वाहिकं वा प्रेतपिता शालाग्निं कुर्वीतेति बैजवापं (:)

" **वैवाहिकेऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि ।**
**पञ्चयज्ञविधानं च पङ्क्तिं चान्वाहिकीं गृही** " ॥ इति मनुः

(३–६७)प्रेतपितेत्याद्यनुवादः। न जीवतो[र्मा]तापित्रोस्तच्छुश्रूषु[र्न] च स्थालीपाके। पित्रा वानुज्ञातो महायज्ञे वाधिक्रियते नहि कुले सिद्धस्य पाकस्य पुत्रादयः पृथग्वैश्वदेवबलिहन्तकारपितृयज्ञाऽतिथिभोजनानि कुर्वते किंतु पितैव कुरुते। अनयोस्तेऽजीवतोरिति। अत्र प्रेतपितृग्रहणमौचित्यानुवादः। तत्राधिकारिविशेषणतयोपादानम्। तेन सकामेन पित्रा विभक्तः पुत्रो जीवत्पितृकोपि कर्मण्यधिक्रियते तदर्थत्वाद्विभागस्य ॥ १ ॥

अत आह—'**अन्यत्र तत**' इति प्रेतपिता परामृश्यते प्रकृतत्वात्। ततो विपरीतो धर्माधर्ममित्रामित्रादिवदन्यत्रेति यथा धर्मादन्यत्रेति मित्रादन्यत्रेत्यमित्र एवं ततः। प्रेतपितृकादन्यत्र जीवत्पितृको निगम्यते। यस्य पितुर्जीवत औद्वाहिको न परिगृहीत आसीत् प्रेते पितरि वक्ष्यमाणविधानेन शालाग्निं कुर्वीतेति पूर्वं प्रेतपितृग्रहणमौद्वाहिकग्रहणात्मकं चिरप्रमीतपितृकस्योद्वाहकाले यदाधानं तच्चिरप्रमीते पितरीत्यर्थः। उद्वाहकाले अयं तु वक्ष्यमाणाधिकारः सद्यः प्रेतपितृकस्योक्तः। प्रेते पितरीति पुनरुक्तं तस्मात्पूर्वं प्रेतपितृग्रहणं चिरमृतविषयमिदं सद्योमृतविषयं प्रेते पितरीतिनिमित्त सप्तमी। प्रज्वलन्तमग्निं पचनादिषु वैश्वदेवादिषु च प्रज्वलन्तमधिश्रयमाणं तं चैतदधिकारभावार्त्। '**जागरयेयुः**' प्रकृत्यर्थो न गम्यते प्रतिजागरयेयुर्बहुव-

१–२ ० घ.। ३ पुस्ताभ्यां, घ.। ४ कः, ख.। ५–६ ० घ.। ७-८ ० घ.।

**प्रेते पितरि प्रज्वलन्तोऽग्निं जागरयेयुः पर्वणि ज्यौत्स्ने पुण्ये नक्षत्रेऽन्यत्र नवम्याः ॥ २ ॥**

चनमधिकारभेदात् । अग्निं[१] वा एते चित्यं चिन्वते य आहिताग्नय इति एतेनाग्नेर्निर्हरणमाहिताग्नौ प्रेते पुत्रेण कर्तव्यमेकाग्नौ तु न संभवति तेनैवाग्निना संस्कारितत्वाल्लौकिकाग्नेर्निर्हरणमन्य आहुस्तदसत् । अदृष्टार्थप्रसङ्गात् । संस्कारानर्हत्वाच्च विनियोगोपदेशभावाच्च । न लौकिकस्य प्रतिपत्तिसंस्कारोऽस्ति । यस्य गार्हपत्यादयस्तस्यापि सभ्यावसथ्ययोः समाख्यया गृह्यकर्मार्थता दृश्यते तयोर्निर्हरणप्रतिपत्तिर्युक्तेति[२] ॥ 'जागरयेयुः' कियन्तं कालमित्यपेक्षायां यावदाशौचमिति युक्तमशुचेरनधिकारात् । अवकाशेऽनेन विधानेन निहृत्याग्निं प्रातर्यथाधानं शालाग्नेस्तस्मिन्नेव काले वक्ष्यति तत्कुतोऽशुचेरधिकारः ।

ननु शालाग्नौ चैके इति पक्षेऽप्याशौचेऽपि स्यात् । नैवम्-अग्निमतो हि तैत्पर्वणि[४] अन्यत्र तत इति व्यवहितेन संबध्यते । उक्त? मानन्तर्यसंबन्धे तु प्रेते पितर्येवपर्वणि ज्यौत्स्ने पुण्ये नक्षत्रे इति कालविकल्पः स्यात् । नत्वेकादशेऽहन्यरणिपाणिजागरणं स्यात् । उक्तं च प्रेते पितर्येकादशेहनि शुचिर्भूतो वैश्वदेवादि पञ्चमहायज्ञेष्वधिकारात्तेषामेवाग्निः साधनं तस्मिन्नेवाहनि तदाहरणे प्रवर्त्तते ( द. स्मृ. १, १०-११ )—

अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः ॥
जपे होमे तथा दाने स्वाध्याये च रतः सदा ।
नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्च्युतः ॥

इति स्मृतिवचनादाशौचान्त एव शालाग्निकरणेऽधिक्रियते प्रेते पितरीति निमित्तसप्तम्याप्येतत्सूत्रितम् । यस्तु पित्रापि पृथक् शालो ? " न कुलं कुलं स्यादिति " वचनाद् विभज्य पृथक् पाकः कृतस्तस्य पर्वणीत्यादिकालप्रती-

१ यथाग्निं, घ. । २ तयोस्तस्याशौचे, ग. च. । ३ हितं, ख. । ४ ० ख, ग. च. । ५ तदर्थं, घ. । ६–७ ० घ. । ८–९ ० घ. ।

त्वणं कुलाधीनत्वादधिकारप्रतिपत्तेस्तथानेकभ्रातॄणामविभक्तधनानां त्यागासंभवात्प्रेते पितर्यनधिकारः प्राग्रिक्थविभागात्सपिण्डीकरणं कृत्वा विभजेरन्निति सपिण्डीकरणान्तं सह कुर्युरिति च स्मरणात्तद्विषयम् ।

'पर्वणि ज्यौत्स्ने पुण्ये नक्षत्रे' इति पर्व पौर्णमास्यमावास्या वा ज्यौत्स्नः पूर्व(:)पक्षः पुण्यं नक्षत्रमनुकुलमज्यौत्स्नेपि पुण्ये नक्षत्रे अन्यत्र नवम्या इत्युभयबाधः । अत्र कश्चिदौद्वाहिके अरणिषूपसमारोपणमाह तदसत् सूत्रभाष्यकृतेदमुक्तमष्टका—वैश्वदेवादीनि औद्वाहिके प्रतिषिद्धानि तस्मिन्नायुष्यहोमान् जुहोतीति प्रकृत्य तस्मिन् भार्यामुद्वहेदिति विवाहपर्यन्तानि च तस्मिन्कर्माणि नाष्टकावैश्वदेवादीनि पिण्डपितृयज्ञस्तु भवति चातुर्थिकान्ते दर्शनादिति तत्र कारणमनुगन्तव्यं तद्यद्यौद्वाहिकमेव समारोप्य मथित्वाऽऽदध्यात्तदायुक्तमनुपदेशात् । अन्यत्र तत इति व्यतिरेकानुपपत्तेश्च भिन्नार्थत्वानुपपत्तेरित्यर्थः ॥ अपरस्यैवं मतमौद्वाहिके जीवति पितरि गार्ह्याणि कर्माणि प्रेतभूते तु पितरि तमेव समारोपादिना शालाग्निं कुर्वीत । सेयं बालक्रीडा यदि जीवति पितरि तत्र पाकयज्ञादिकी क्रिया, मृते पितरि किमिति न स्यात् कर्मार्थं हि शालाग्निः स च विद्यत एव यथा प्राक् पितृमरणात् तत्र कर्माणि तथैवोत्तरकालं स्युः किं पुनराहितेन ऋते वचनात् ।

अपरे तु "न तत्र पर्व कुर्वीत कुर्यादाग्रयणादिक" मिति तदसत् । यदि पर्वण्यधिकारः कथं न तद्विकारेष्वाग्रायणादिष्वधिक्रियते तदसत्परिकल्पितं कृतावसथ्यस्य पितृग्रहणं नियमार्थं वदन्ति । तत्र को नियमः । यत्प्रेतपिता शालाग्निं कुर्वीत तत्प्रेतपितृक एवेति पूर्वस्मिन्नियमे औद्वाहिकमेव शालाग्निं कुर्वीत न निर्मन्थ्यादिकं यथा काठके ततो जीवत्पितृकोऽपि औद्वाहिकं निर्मन्थं वा शालाग्निं कुर्यात् । यत एवकारकरणं ततोऽन्यत्रावधारणं[१] [इति] न्यायेनौद्वाहिकस्यानियतत्वादुत्तरस्मिन्नियमे प्रेतपितैव औद्वाहिकं शालाग्निं कुर्वीत न जीवत्पितृक इति औद्वाहिकस्य प्रेतपितृकस्य नियतत्वात् जीवत्पितृको निर्मथ्यमेव शालाग्निं कुर्यान्नौद्वाहिकमिति नियमार्थम् । उभयोर्नियमश्चायं नैवं जीवत्पितुः शालाग्न्यभावात् । गार्ह्यकर्माभावाद्रिक्थं[३]

१–३ ० घ. । २ ण्न्या, ख. ।

विभागेऽनधिकारः स्याद्धर्मार्थत्वाद्विभागस्य । अस्ति च पितुरिच्छया रिक्थविभागः । न च गार्ह्यकर्मण्यधि(नधि)कृतस्य श्रौतेऽधिकारः । न च तस्मिन्नौपासनीयं ब्राह्मौदनिकमादधाति शालाग्निमित्यौद्वाहिकस्य ब्राह्मौदनिके प्रदर्शनार्थं धारणं नह्यौद्वाहिकस्य(केन) विना कर्माधिकारे धारणमस्ति कर्मप्रयुक्तत्वादग्निधारणस्य, न च शालाग्निरौद्वाहनीयाद्भिद्यते तत्पाकशब्दत्वात्तेषां मते तस्मिन् भार्यामुद्वहेत्स शालाग्निः किमर्थं कर्त्तव्यः। विधानमिति ? वाक्यशेषः । न तु शालाग्निसंज्ञौद्वाहिकस्य । शालावान् न तस्य ब्राह्मौदनिकत्वं यदि शालाग्निः किमर्थमौद्वाहिकं शालाग्निं कुर्वीत, स हि शालाग्निः क्रियते । अपि च जीवत्पितृको बहुद्रव्यादस्य प्रतिबन्धकः । तदधिकानीव तु गार्ह्ये कर्माणि अल्पद्रव्यायाससाध्य इति । यदि परं पञ्चमाद्वेदादयं विशेष उपलब्धस्तैर्नियमार्थं पुत्र एवायं भवति । पितृयज्ञविधानमौद्वाहिके चाधिकारमिच्छन्ति । वात(तु)ला एवं नेच्छन्ति, न स्वस्थाः ॥

अथ कथं द्वे पदे समानविभक्तिके औद्वाहिकमिति शालाग्निमिति चैकस्मिन्वाक्ये संगते स्याताम्। ते न तावद्विशेषणविशेष्यत्वेन संगतिः(ते)। औद्वाहिकोयं शालाग्निरस्यमिति भेदेनाभ्युपगतौ तेरेव(तत एव)हेतोः संज्ञासंज्ञित्वेन पर्यायत्वेन संगतिः ॥ अस्मत्पक्षे सर्वथा संगतिरभेदात् । अथ प्रत्येकं वाक्यपरिसमाप्तिरौद्वाहिकं कुर्वीत शालाग्निं कुर्वीतेति तन्न कर्मार्थत्वादग्नेरेकेनैव कर्मसिद्धौ सत्यां न समुच्चयः । किं तर्हि विकल्पो बैजवापमिव चास्मिन् पक्षे यथा भवति तथा व्याख्यात-' मन्यत्र तत ' इत्यत्र । न च करोतिर्द्विकर्मको[ऽतो] गां दोग्धि पय इतिवत्संगतिरत्र न लभ्यते । तत्कार्यादप्यत्र संगतिर्नास्ति यथा देवदत्तं पुत्रं कुर्वीतेति युष्मत्पक्षस्य । तस्मादुपमानादग्निर्माणवक इतिवत्परार्थकल्पनयाप्यस्मत्पक्षसंगतिः । याऽपि वाक्यभेदेन संगतिस्तस्यां वा शब्दकल्पनास्यादौद्वाहिकं वा कुर्वीत शालाग्निं वेति ततश्चान्यत्र तत इति विशेषविधानार्थो नोपपद्येत, च शब्दकल्पनायां तु अग्निद्वयधारणप्रसंगः । अथ विभक्तिविपरिणामे संगतिः स्यादौद्वाहिकाच्छालाग्निं कुर्वीत औद्वाहिकेन वा तत्र पञ्चमीकल्पनायामौद्वाहिकादवयवसु-(स्यो)पादानं स्यात्, न च विभक्तिविपरिणामे प्रमाणमस्ति । असत्यां

१-४ ० घ. । २-३ ० ग. च. ।

संगतौ विभक्तिविपरिणाम इष्यते उक्ता च संगतिरनेकप्रकारा। अथ मृदं घटं करोतीति वीरणादि कटमिति वत्संगतिर्भवेत्-नोपास्ति प्रयोगः [ नोपादानस्यास्ति प्रयोगः ] ॥ अथ मृद्वीरणादेरुपादानं कारणत्वेन ईप्सिततत्वाद्विवचनातः कारकाणीति प्रकृतौ द्वितीया घटेत। द्वितीया प्रतीयमानाऽऽकारशब्दापेक्षा यथा पिष्टपिण्डान्सिंहान्करोतीति सिंहाकाराः क्रियन्ते नैवम्-औद्वाहिकं शालाग्न्याकारं कुर्वीत आकारानवगमात् ॥ अथादृष्टाऽऽकारोभय औद्वाहिकं संचाराधानादिना तु कुर्यान्न तु जागरणादिना श्रुतत्वादरणिदाहनिष्ठपनस्य ॥ अपि च औद्वाहिकस्य कारणत्वेन शालाग्निं प्रति, तदभावेऽकार्यमेव स्याद्वीरणाभावे कटस्येव। अथ—

यद्युत्सीदेत शालाग्निरौपनायनिकोऽपि वा ।
तस्यैतत्पुनराधेयमौपनायनिको विधिः ॥

नैतदन्नदा? नादि शालाग्निग्रहणात्। आवसथ्योत्सादे एवोपनयनं स्यान्नौद्वाहिकोत्सादे मुख्यगौणयोर्मुख्ये संप्रत्ययात्। शालाग्निरावसथ्यो गृह्यते नातिदेशि औद्वाहिकशालाग्निः। न चोद्वाहिकं तत्तु शालाग्निरित्युक्तम् ॥ न चोपनयनमग्नेःसंस्कारः पुरुषसंस्कारो ह्यसौ उद्वाहेनापि स्त्री संस्क्रियते पुरुषश्च नत्वग्निः संस्कृत एव जन्माग्निरौद्वाहिकस्य जन्मन्यजस्रधारणमात्रेणालौकिकं ? तस्यान्योजस्रधारणेऽहोरात्रं पक्षं मासं वा विच्छिन्ने भाव एव हि, न छिन्नः कालः पुनरादातुं शक्यो नदीवेगस्थानीयः। नालं चातिक्रान्तं कालं संधातुं देवा अपि शक्ताः। यो मन्त्रक्रियादिना संस्कृत उच्छिन्नः स पुनस्तेनैवमादिना संस्क्रियते यस्तु कालसंततधारणसंस्कृतः स उच्छिन्नस्तूच्छिन्न एव न तेनैवोत्तीर्णेन कालेन तस्य योगोस्ति। अनुगतसृष्टिः कथं निमित्तानन्तरं माथितः स एव भविष्यति अरणि? वा करणान्यथानुपपत्या यद्वा नाभूदत एवाजस्रधारणपक्षोऽसत्यत्वान्नादृतः। उपनयनस्य पुरुपसंस्कारत्वान्नाग्न्याधेयता तदभावान्न पुनराधेयता तत्पुनःशब्दानुपपतिश्च प्रागुपनयनादुत्सन्ने किं पुनराधेयमिति नोक्तमौपनायनिक उत्सन्ने को विशेषः। प्रायश्चित्तकथनेनन हि तच्छब्देन औपनायनिकः परामृष्टस्तस्मिन्भार्यामुद्वहेदित्यत्र। किं तर्हि जन्माग्निरतस्ताद्विच्छेदे उपनयने नापि संधानं किं पुनरुपनयनेनेत्यलं नष्टसंप्रदायिवचोविचारणैर्नं।

१-४ ० घ. । २ करण, ख. । ३ स्मै ख. ।

अपर आह–वक्ष्यमाणेन विधानेन न प्रेतपिता शालाग्निं कुर्वीत–औद्वाहिकमन्यत्र तत इत्याह मन्थनमभिधायिष्यते । शालाग्निविधानं च मिश्रं तन्त्रभेदप्रतिपादनार्थमभिधीयते, अन्यत्र शालाग्निविधानान्मन्थविधानमिति तदेतदशब्दत्वादनुक्रम्यमान(ण)त्वादेकस्य कथने पुनरुक्तता, कथने च प्रयोजनभावः । अस्तिचेत्प्रयोजनं तदेव कथनीयं स्यादित्यपरितोषेण व्याख्यानान्तरमाह–अथवा प्रेतपितृकस्य शालाग्निविधानमुक्तं तज्जीवत्पितृकस्य न प्राप्नोति तत्र कश्चिद् द्वितीयो व्यावर्त्तते अन्यत्र तु प्रव्रजितपितृकस्य तु जीवत्पितृकस्यापि भवति । पञ्चयज्ञाधिकारित्वात् प्राप्ते प्रवक्ताऽन्यत्वादपरि तुष्यन् व्याख्यान्तरमाह–अथवा 'ऽन्यत्र ततः' अकृतदारात्प्रेतपितृकः शालाग्निं कुर्वीतेति[अ]कृताधानात् । कृताधानस्याप्रेतपितृकस्यापि न भवति । अत्र कारणमाह । उक्तं च औपासनीयं ब्राह्मोदनिकमादधाति शालाग्निं निर्मन्थं वा शालाग्निस्तत्रैवानुप्रतिष्ठितः किं पुनः कारणेनेत्यपरितुष्यन् व्याख्यान्तरमाह–अथवा 'अन्यत्र ततः' प्रकृतदारात्प्रेतपितृकः शालाग्निं कुर्वीतेति । अरणिपाणी जागृत इति भार्यासंयुक्तमाधानं तदभावादनधिकारित्वादत्यल्पमिदमुच्यते अन्यत्ततो कृतदारादिति । 'अन्यत्र ततः' पतितात् शूद्रादश्रोत्रियादन्धाद्बधिरात्–मूकात्पङ्गोः कुनखादधनादिति शून्यहृदयो व्याख्यान्तरमाह ॥ अथवाऽन्यत्र ततः प्रतिपादितमिदमप्यत्यल्पमन्यत्र ज्वरितान्महाव्याधिग्रस्ताद्राजपीडिताच्चेति अपरिपूर्णहृदयो व्याख्यान्तरमाह ॥

अपरे वर्णयन्ति प्रेतपितृकस्य पितुः प्रयाणानन्तरमेकादशेऽहनि जागरणं कृत्वा द्वादशेऽहनि श्राद्धं कुर्वीतेति श्राद्धसंबन्धेन सामर्थ्यार्थगृहीतः कालोऽप्रेतपितृकस्य तु अथान्यत्र ततः' तस्माकालाग्निविधानमिति ॥ न नु पूर्व–व्याख्यानादस्य को विशेषः । तत्रापि पर्वणि ज्यौत्स्न इत्यादिकालः प्रोषितपितृकादेरुक्तः प्रेते पितर्येकादशेहनि अर्थादपवादकालयु(उ)क्तः अत्रापि श्राद्धसंबन्धेन स एव काल उच्यते तत्राप्रेतपितृकस्यापि अन्यत्र तत इति विशेषः । तत्र कृतदारादि एवं तर्हि ज्वरितादीनां कदाचिदपि कालेऽधिकरणं न स्यात् । प्रोषितदारात्प्रेतपितृकविषयं व्याख्यानत्रयम् । एकस्मिन्नेव व्याख्याने प्रोषितादयस्त्रयः किमितिनोदाहृतास्तद्यदि परमूढमतित्वात्परमतं परमतेन दूषयितुमाह–

१–३ ० घ. । २ धिकृत, ग. ।

आर्यास्तु जीवत्पितृकस्य नेच्छन्ति इत्यादिना तु प्रव्रजितपितृकस्य । पूर्वं जीवत्पितृकस्यायुक्तमनेनैव हेतुना पिता विभज्य जीवनेस्य जीवत्पितृकस्य केन वार्यते सत्यमत एष भ्राम्यन्व्याख्यानान्तरमाह—इह वा कालविकल्पार्था विभाषेति; पर्वणीत्यादि कालानभिधाय मन्थनविधानशालाग्निविधानयोरभिधानादित्यभिप्रायेणोक्तमिह वा कालविकल्पार्था विभाषेति नह्यस्य कश्चिद्वचनस्थितोर्थोऽत्र व्याख्यातः । अन्यत्र तत इति सर्वनाम्नः परामर्शकत्वस्वाभाविकमर्थमपश्यन् व्यक्तहृदयः स वार्थेवेति वदन् प्रव्राजितपितृकादीनप्रकृतान्परामृशन् क्वचिन्नैकार्थं क्वचिदसम(भि)व्याहृता(तस्या)पि स सम्यगर्थमुक्तवान् तदुक्तम्—

" अथवा क्रियते विश्वो ग्रन्थः कश्चिद्वाचकः ।
अवाचकेऽपि व्याख्यानं कुर्वन्ति श्रोत्रियादयः ॥ "

अपि च सर्ववचनविरुद्धमपि जल्पति यदि हि प्रत्यक्षशिष्टं तावदेव भवति अपूर्वत्वादित्युक्त्वाऽथ पूर्वमश्रुतं कल्पितवान् । प्रभातकाले पुराणेनाख्याग्नौ प्रक्षिप्य तथा वसन्तादि कृत्तिकादि चोक्तवान् । विरुद्धमपि च पर्वणीत्यादिना प्रत्यक्षसिष्टे चोदकप्राप्तविकल्पो बाध्यते । अपूर्वत्वात्तदप्राप्तस्य तु का कथा तथा च गृह्यान्तरे आवसथ्यविधानमुक्त्वोक्तम् । " औद्वाहिकं प्रेतपिता शालाग्निं कुर्यादिति " अत्राप्यन्यत्र तत इति आवसथ्यविधानात् । औद्वाहिक शालाग्निकरणमन्यत् । अन्यत्र तत इति तत औद्वाहिकात्प्रेतपितृकादौद्वाहिकः । अप्रेतपितृक इत्युभयं वा प्रकृतत्वात् तत इति परामृश्यते इत्युक्तम् ।

अथ यः प्रेतपितृक उद्वाहादनु शालाग्निं कुरुते स कथं कुर्वीत । यदि दिवोद्वाहकर्म तदा सभार्यस्य महायज्ञेऽप्यधिकारात्तदहरेव औद्वाहिकः शालाग्निसंबन्धात् शालाग्निरुच्यते तत्र वैश्वदेवादि प्रथममष्टकायामुद्वाहेष्टकां कृत्वा सायं होमः । उत्तरकाले विवाहे रात्रौ वैश्वदेवं कृत्वा भोक्तव्यम् । निमित्तातिक्रमतया प्रातर्होमे प्रक्रमं चेच्छन्ति उद्योतनादयः । चातुर्थिकान्ते इत्यपरे ॥ यस्तु प्रेते पितर्यौद्वाहिकग्रहणाभावात् तस्मिन्नेवाहनि पञ्चयज्ञाधिकारादरणिजागरणादि स कुरुते । औद्वाहिकधारणं जीवत्पितृकस्य न नैमित्तिकमित्यनेनाभिप्रायेण औद्वाहिकाभावात् द्वादशेऽहनि श्राद्धं कुर्वीते-

१—२ ० घ. । २ ० च. ख. ।

**स्नातः शुचिरहतवासाः ॥ ३ ॥ वाग्यतावरणिपाणी जागृतः ॥ ४ ॥**

त्युक्तम्। यस्य त्वौद्वाहिको विद्यते स एकादशेऽहनि शुचिर्भूतः पितृभ्यो दद्यादित्यग्निमत्त्वादेकादशाहव्यतिक्रमे प्रत्यवेयात्। अस्ति चौद्वाहिकाग्नौ श्राद्धं चातुर्थिकदर्शनात्तस्मादविद्यमानेऽग्नौ एकादशाहात् श्राद्धोत्कर्ष इति द्वादशेऽहनीत्युक्तं पर्वणीत्यादावितरस्याशुचिर्बलिहरणे नाधिक्रियते गृह्यस्थानविशेषेषु बलिहरणात् ॥ यस्तु जीवत्पितृक उद्वहति स पित्रानुज्ञातो वैवाहिकाग्निं पित्रोद्दिष्टशालायां परिचरेत्। अननुज्ञातस्य नास्त्यधिकारः। न च पितृसमानगृहे उलपराज्या येष्वध्येति प्रवसन्नित्यभ्युपैति। नाप्यथास्यै गृहान्विसृजेदस्वामित्वात्। यद्यौद्वाहिक उत्सीदेत पुनरौद्वाहिकेन विधिना तथैव भार्यायाः पुनः करणं येषामावसथ्यविधानं नास्ति पाणिग्रहणादि गृह्यं परिचरेदिति वचनाद्येषां त्वावसथ्यविधानं नास्ति तेषां पुनराधानं स्यादौद्वाहिकेपि शालाग्निशब्दाभिधानात्[2] ॥ २ ॥ [3]प्रेते पितरि किं शालाग्निविधानेन। अत्रोच्यते औद्वाहिकं शालाग्निं कुर्वीतेति वदन् मुख्ये संभवात्तदङ्गे पशुयागे निवेशः। एवं च यः कश्चिदाह ब्रह्मौदनं भवति न भवतीति च तत्प्रत्युक्तम्। अन्यत्र तत इत्यादि जागरयेयुरित्यन्तम्। अन्यत्रान्यस्मिन्देशे ततस्तस्माद्देशात्। यत्र स पित्राग्निरासीत्। प्रेते पितरि सति प्रज्वलन्तं जागरयेयुरित्यर्थः। बहुवचनं पुत्रबहुत्वापेक्षया। पर्वणि पर्व पौर्णमास्यमावास्या ज्यौत्स्नः शुक्लपक्षः। पुण्यनक्षत्रमनुकूलशुभमाधानलक्षणं च नवमीं तिथिं वर्जयित्वा एतच्च प्रेतपितुर्यथासंभवे ज्ञेयं जीवत्पितुरवश्यं भवति[4] ॥ २ ॥

'स्नातः' अहतवासा इति तावदवश्यमपश्यन् यत्र स्नानं क्रत्वर्थमिति दर्शयति पुरुषार्थत्वेन स्यात्। स्यान्नित्यविहितत्वात्। स्नातः, अहतवाससाविति वचनात् क्षौमपरिधापनं ब्राह्मौदनं च परिसंचष्टे नैवमपूर्वविधित्वात्काठके ॥ स्नातः यथाह जागृतः। स्नानमग्न्याधेयाङ्गम्। अहते वाससी नवे उभयोर्दम्पत्योर्भवतः। वाग्यतौ नियमितवाचौ। अरणिपाणी पाण्योररणी गृहीत्वा। द्विवचनादेक उत्तरारणिं यजमानो गृह्णीयात्। अधरारणिं पत्नी ॥ ३ ॥ ४ ॥

---

१-२ ० घ.। ३-४ अधिकं, घ. इदं ( १६ ) सूत्र भाष्येऽस्ति.।
५-६ अधिकं, घ. इदमपि ( १६ ) सूत्र भाष्येऽस्ति.।

**अवकाशेऽक्षतान्यवान्पिष्ट्वा मन्थमायौत्यनालम्बमिक्षुशलाकया बहुलम् ॥ ५ ॥**

**हिरण्यपाणिꣳ सवितारꣳ वायुमिन्द्रं प्रजापतिम् ।**
**विश्वान्देवानङ्गिरसो हवामहे**
**अमुं क्रव्यादꣳ शमयन्त्वग्निम् ॥**

**इति मन्थेनाग्निमवसिञ्चति ॥ ६ ॥**

---

'अवकाशे' उपव्युषसि अक्षताननवहतान् यवान् पिष्ट्वा यन्त्रकादौ[1] मन्थनायौत्युदके[2] यव-चूर्ण-तूलं प्रक्षिप्य कुण्डादौ अनालम्बमवलम्बनरहितमिक्षुशलाकया आङ्वालयतीत्यर्थः । द्रवद्रव्यसंपृक्तेषु सक्तुषु मन्थशब्दः प्रसिद्धः । इह तत्सादृश्यान्मन्थ उक्तः । बहुलं प्रभूतम् ये[3] तु तूष्णीं पवित्रे उत्पाद्येत्यादि-स्थालीपाकधर्मेण मन्थं कुर्वन्ति तेभ्यो नमः । पाद्यार्घमधुपर्कादिषु तेषां पवित्रोत्पत्त्या नूनं विस्मृतम् । इतरथा अभि[4]...... द्यस्मिन् रिष्टं को नाम येन मूढः । असंपदे अप्रकृतिविकारे हविर्द्धर्माश्रयात्[5] ॥ [6]अवकाशे—अवकाशे अवगमे प्रकाशे । अस्तंगते सवितरीत्यर्थः प्रेतपितृकस्यान्ते निर्हरणं विधीयते । स च यथा पिता दिष्टां गतिं गतस्तथा पित्राग्निरपि मन्थे[न्थने] नानुगमनीयः । एवं चास्तं गते सवितरि युक्तम् । संहरणात्मको सौ कालः । अक्षतान्यवान्पिष्ट्वा । मन्थमायौति करोतीत्यर्थः । अनालम्बं सशरीरिणा । अत एवैकेक्षुशलाकोक्ता । एतच्च दशमे हनि सायं कर्त्तव्यमर्थादत एव तस्य साधारणमुक्तम् । बहुलं पूर्वो ? भू(प्रभूतम्) ॥ ५ ॥

'हिरण्य' अनेन मन्त्रेणावसेचनमुपशमनार्थम् । अग्नेः सोमो राजाऽनेन समारोपणमुपशान्तस्याग्नेः । कटे वा वीरणमये कृतायां कच्छादिमय्यां कच्छाकारायामुपधानम् । एतस्माच्च मन्त्रलिङ्गादावसथ्यस्यैव प्रतिपत्तिः । नहि लौकिकस्याग्नेः स्थाने हविर्वहनोऽग्निराशास्यते प्रहिणोति क्रव्यादमिति मन्त्रेण लिङ्गादग्निमादाय दक्षिणा प्रत्यग् हरन्ति । अग्निमादा-

---

१ मा, ख. घ. । २ ० घ. । ३-५ ० घ. । ४ भिष्विय, च. । अभिष्वीय, ग. ।
६-७ अधिकं, घ. ।

सोमो राजा विभजतूभाग्निर्ऽविभाजयन् ।
इहैवास्तु हव्यवाहनोऽग्निः क्रव्यादं नुदस्व ॥
इति कटे कृतायाॅं वाग्निॅंसमारोप्य प्रहिणोति ॥ ७ ॥
क्रव्यादमग्निं प्रहिणोमि दूरॅं यमराज्यं गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा देवेभ्यो हव्या वहतु प्रजानन् ॥
इत्यग्निमादाय दक्षिणा प्रत्यग्हरन्ति ॥ ८ ॥ सहाधिकरणैर्यन्ति ॥ ९ ॥ स्वकृत इरिणे—
सीसे मलिम्लुचामहे शिरोमिमुपबर्हणे ।
अव्यामसिताया॑मृष्ट्वास्तं प्रेतसुदानवः ॥
इति सीसमुपधान्येन्यस्याध्यधि ॥ १० ॥

---

येति प्रहिणोतेरेवेतिकर्त्तव्यता । अस्मादपि मन्त्रवर्णात् । हविर्वहनस्थाने हविर्वहनाग्नेः प्रार्थना । त्रेताग्न्यायतनैः संयुक्तं न युक्तेत्यर्थः ॥ हिरण्य- अनेन मन्त्रेण मन्थेनाग्निमवसिच्य । सोमो राजाऽनेन मन्त्रेण कटे अग्निष्ठं कृत्वा समारोप्य प्रतिगृह्य प्रहिणोति नयेदित्यर्थः। क्रव्यादमग्निमनेन मन्त्रेण दक्षिणप्रतीचीं दिशं हरेयुरित्यर्थः । सहायतनैः त्रेताग्नीनां ये आयतनास्तैः संयुक्तमित्यर्थः । बहुवचनात्पुत्रैः सह कर्त्तव्यं सत्रिवत् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

'स्वकृत इरिणे' सीसे मलिम्लुचा मह इति इरिणे स्वकृते इति कटे उपधाने निमित्तसप्तमी । उपधानार्थं सामान्यार्थेत्यर्थः । अथवोपधानस्थाने उत्तशीर्षके सीसे न्यस्याध्यधि । अध्यधि शिसे सीसस्य समीपे साधिकरणेऽग्निं करोत्यस्ये त्यर्थः । सीसमिति कारकं चेत्तस्यान्यस्यशब्देन संबध्यते । अध्यधिशब्देनोपपद- विभक्त्या द्वितीया उभयत्र समाना, अर्थमात्रे भिद्यतेऽन्यस्याग्निमध्यधि सीसम् ॥ सीसे अनेन मन्त्रेण सीसमुपधाने उपधानस्थाने न्यस्य क्षिप्त्वा अध्यधि उपर्युपरीत्यर्थः । तेनोपधानदेश उपसीसं तस्मिन्नुपर्याग्न्यायतनास्तेषामुपरितनं विविक्तमग्निमित्यर्थः ॥ १० ॥

---

१ मिष्ट्वा, ग. । २ यन्ती, घ. । ३-४ अधिकं, घ. । ५ कण्ठे, ग. घ. । ६ रु, ख. च. । ७ उच्छीर्षके, ख. । ८-९ अधिकं, घ. ।

धाम्नो धाम्न इति तिसृभिः परोगोष्ठं मार्जयन्ते ॥ ११ ॥ अनपेक्षमाणाः[1] प्रत्यायन्ति ॥ १२ ॥ नलैर्वेतसशाखया वा पदानि लोपयन्ते—

मृत्योः पदानि लोपयन्ते यदेतद्द्राघीय[2] आयुः प्रतिरं[3] दधानाः ।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवन्तु यज्ञियासः ॥१३॥
अनड्वाहं प्लवमन्वारभध्वꣳ येनावेपत्सरमा रपन्ती ॥ इति ॥१४॥

'धाम्नो धाम्न इति' तिसृभिर्मार्जनम् । परस्ताद्गोष्ठस्य परोगोष्ठमित्यव्ययीभावात् । [4]अन्येनोक्तम् । नास्याग्निं गृहाद्धरेयु र्नान्यत आहरेयुरिति विनियोगादन्योऽग्निरवशीर्णे प्रत्यवायोस्तीति गम्यते स तापपाकदीपार्थः स्यात्तस्येदं निर्हरणविधानमिति न वाऽऽचार एवं प्रत्यहमन्यत आहृत्याग्निपचनं कुर्वन्तो दृश्यन्ते । न च लौकिकाग्निविषयमेतल्लिङ्गक्रमाच्च ब्राह्मे[?]कविषयत्वेन व्याख्यातमन्येन[5] ॥ "[6]धाम्नो धाम्न इति तिसृभिरिति स्त्रीलिङ्गनिर्देशात्तिस्र ऋचो ज्ञेयाः । यथा धाम्न इत्येका, उदुत्तमं वरुणं पाशमित्येका, सुमित्रान आप इत्येका । एतास्तिस्र ऋचो ज्ञेयाः । परोगोष्ठं परस्य द्वेष्यस्य यं (?) गोष्ठं स्थानं तं मार्जयन्ते तत्र मार्जनं कुर्यादित्य[7]र्थः" ॥ ११ ॥

'अनपेक्ष' नलैर्वेतसशाखया पदान्यागच्छन्तो लोपयन्ते श्लिष्टं कुर्वन्ति मार्जनादेशात् । मृत्योः पदमग्नौ[8] पादन्यासचिन्हेन । मृत्युरन्तरमादिभ्यः प्रायेण पदानि लोपयन्तीत्यर्थः । यदेतद्राघीयलोपनमन्त्रो [9]मन्त्रवर्णाद्धारस्रुसुकामा लभ्यासवत ? गच्छेत्[10] ॥ "[11]ईरणादप्रतीक्षमाणाः परं देशं प्रत्यायन्ति । नलैः-नडमयैस्तृणैर्वेतसवृक्षशाखया वा पदानि पदमुद्राणि भूमौ लोपयन्ते उत्सृजन्तीत्यर्थः । मृत्योः पदमित्यनेन मन्त्रेण, अनड्वाहमित्यनेन मन्त्रेण लिङ्गादागता अनड्वाहमालभन्त इति चेत्[12] ?" ॥ १२ ॥ १३ ॥ १४ ॥

१ वेक्ष, ग. च. । २ या, ग. च. । ३ त, ग. च. । ४–५ ० घ. । ५ मन्यते, ख. । ६–७ अधिकं, घ. । ८ मग्नोत्पद, ग. च. । योत्पद, घ. । ९–१० ० घ. । ११–१२ अधिकं, घ. ।

**अग्न्यायतनमुद्धत्यावोक्ष्याग्न्याधेयिक्यान्पार्थिवान्संभारान्निर्वपत्यूषसिकतवर्जम् ॥ १५ ॥ अरणिभ्यामग्निं मथित्वा हिर-**

'अग्न्यायतन' शब्दार्थस्तस्याग्नेरायतनं स्थानं गम्यते। उद्धृत्य खात्वा वोक्ष्य इत्यादि अग्न्याधिक्यान् पार्थिवानित्यर्थोद्वानस्पत्यस्य पार्थिवत्वेऽपि व्यवच्छेदः। अपां तु नित्यं पार्थिवत्वं पृथिव्यापस्तेज इत्यनन्तभेदात्। भूतानां पृथिवीस्थानाद्वा पार्थिवा आपः। उषसोऽपार्थिवत्वात्प्रानि(ति)षेधः। तूष्णीं निर्वापपूर्वविधिः। उदकवराहविद्[3]वल्मीकवपाशर्कराखुकिरयोऽत्र संभाराः। ईह केन चिदुक्तं ततो यथार्थकर्मसंनिपातो विज्ञेयः। इति प्रागुदञ्च-नसूत्रावसरे स्यात्तदा तद्विरोधाभावान्निर्मथ्याभिमुखं प्रणयेत् प्रसङ्गाच्च। उन्मत्तव्याख्यानं तस्य प्रागुदञ्चमित्याद्यनुपपन्नमाशङ्क्य स्थालीपाकवत्तया परिहारान्न सम्यगवबुद्धम्॥ [4]अग्न्यायतनमग्न्याधेयक्षेत्रमुद्धृत्य लक्षणं कृत्वा अवोक्ष्याभ्युक्ष्याग्न्याधेयिकान्पार्थिवान् संभारानित्यग्न्याधेये ये उक्ताः। पार्थिवग्रहणं वानस्पत्यनिरासार्थम्। तत्राप्युपसिकतवर्जम्। उषाः सिकताश्च पार्थिवत्वात्प्राप्ताः प्रतिषिध्यन्ते। तेषां च निर्वापे ते च समन्त्रा भवन्त्येव गुणत्वान्मन्त्राणाम्। तथा च यत्र मन्त्रं नेच्छति तत्र प्रतिषेधं करोति। तथा तूष्णीं स्रुक्स्रुवौ संमृज्येति ॥ १५ ॥

'अरणि' ननु केयमाशङ्का[11]ऽरणिभ्यामेवमन्थनं स्यात्तत्पाणि जागरणं स्यात्। उत्तरार्थोऽनुवाद इत्यदोषः। हिरण्यशकलं नात्र ब्रह्मणो हिरण्य-निर्वपणम्। अरणिभ्यामिति यावदुक्तार्थत्वानुवादात्। उपस्थकृतस्तिर्यग् जानुरित्यर्थः। गौर्वासः—कांस्यम्। गवादीनां वाक्यानुपूर्व्या दानदक्षिणा ऋत्विक्कर्तृकत्वं गम्यते। प्रागुदयकालातिक्रमेऽनाम्नातप्रायश्चित्तमङ्गत्वात्। प्रधानकालस्यातिक्रमे महान्दोषः। [12]प्रधानकालः प्रेते पितरीत्यादि यत्र विधाने शालाग्निविधानयोः परस्परकर्मव्यतिषङ्गविधानं कालेत्यादा(दौ) विध्यर्थं नत्वङ्गसंबन्धार्थमत एव केन चित् पक्षान्तरमुक्तमन्यत्र ततः शालाग्निवि-धानात् मन्थविधानमित्यपवादाशङ्कया इति[13]।

१-२ ० घ.। ३ विहत, घ.। ४-६ ० घ.। ५ तदसद्धि, च.। ७-८ अधिक, घ.। ९-१० ० घ.। ११ कांक्षणा, ख. ग. च.। १२-१३ ० घ.।

**ण्यशकलं च न्युप्य प्रागुदयादुपस्थकृतो भूरिति ज्वलन्तमादधाति ॥ १६ ॥**

अन्यस्त्वन्यथा व्याचष्टे-औद्वाहिकं किमयं विधिः । आहोस्विन्नियमः । उत स्वित्परिसंख्या ? । तत्र विधिरप्राप्ते भवति यथा यावज्जीवमग्निहोत्रं जुहोति इत्यादि सर्वम् । यस्मिन्प्राप्ते सति पाक्षिकस्य पुनर्विधानं नियमो-यथा व्रीहिभिर्यजेतेत्यादि व्रीहिभिरेव एवमित्यर्थः । नगोधूमादिभिः ॥ परिसंख्यार्थः प्राप्तस्तस्य निषेधः-यथा " इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते " गर्दभरशनां परि-संचष्टे । यथा वा पञ्च पञ्चनखा भक्ष्या इत्यादि अर्थित्वात्सर्वपञ्चनखभक्षणे प्राप्ते श्वाविद् गोधा शल्यकमित्यतोन्येषां भक्षणप्रतिषेधः ॥ तत्रैवं सति यदि विधिस्ततः प्रेतपितुर्विशिष्टस्याधिकरणे शालाग्निकरणं विधीयते । अथ वा नियमस्ततः सर्वस्य जीवत्पितृकस्य मृतपितृकस्य पुरुषार्थत्वात्प्राप्तौ सत्यां प्रेतपितुर्नियम्यते प्रेतपितैव शालाग्निं कुर्यान्न जीवत्पितृक इति ॥ अथ परिसंख्या ततो जीवत्पितृकस्य प्रतिषेधो मृतपितृकस्य तु न विधिवत्प्रतिषेध इति तस्य कामचारः कुर्याद्वा न वेत्यर्थः । तत्र विधिरयं तेन भवति ॥ यतो जातस्यैव मथितोऽग्न्यानयनमुक्तमरणिभ्यामग्निं मथित्वा तस्मिन्नायुष्यहोमः । जुहोत्यादि यावद्विवाहः ॥ तथा च विवाहे पुनरुक्तमग्निं निर्मथ्याभिमुखं प्रणयेदिति न परिसंख्या शास्त्रीयत्वाच्छालाग्निकरणस्य । न हि भोजने पुरुषार्थत्वात्प्राप्तिस्तदेव परिशेषान्नियमोयं कामचारप्राप्तस्य पक्षे सर्वदा नियमः । यथाऽऽग्नेयोऽष्टाकपालः पुरोडाशो भवतीत्यत्र सर्वपुरोडाशप्रकृतिर्यवैरेवेति । अस्य तु शालाकरणस्य शास्त्रीयत्वात् कुतोऽन्यतः प्राप्तिर्यतोयं नियमः स्यात् । उच्यते-अस्ति प्राप्तिः पुरुषार्थत्वादेव कथं शास्त्रीयस्य पुरुषार्थत्वं न हि शास्त्रीय ( : ) पुरुषार्थो भवति पुरुषार्थो वा शास्त्रीय इति किमिति विरुद्धमभिधीयते । शास्त्रीयं पुरुषार्थश्चेति । नैवेद्यं ( दं ) विरुद्धमभिधीयते । अनभिज्ञो देवानांप्रियः । पुरुषस्य त्रिवर्गो हि पुरुषार्थः । त्रिवर्गमध्ये धर्मः पुरुषार्थत्वेन कथ्यत एव । इयांस्तु विशेषः शास्त्रावगतस्यैवधर्मत्वं तथा चोक्तं " चोदनालक्षणोर्थो धर्म " इति अर्थकामौ तु लोकतोऽवगम्येते तदेवं सर्वो जन्तुः पुरुषार्थत्वाद्धर्मं प्रति प्रवर्तते । सर्वदा प्रवृत्तौ प्राप्तायां प्रेतं-

पितृकस्य नियम्यते प्रेतपितैव शालाग्निं कुर्यान्नेतरः। यद्येवं कथं तर्हीदमुक्तं यदि दद्यात्—"येभ्य एव पिता दद्यात्तेभ्यो दद्यादिति" पिण्डपितृयज्ञे। अनेनाभिप्रायेणोक्तम्। यदा पित्रानुज्ञातस्तदा शालाग्निं करोति। अत एव विवाहप्रकरण उक्तम्—"न जीवत्पितृकोऽर्घं प्रतिगृह्णातीति" श्रुतिः। अथवा प्रतिगृह्णाति किमनेनोक्तं भवति तस्मात् स्थितये तन्नियमार्थमेतदिति। एवं च जीवति पितरि यदि न करोति न ततः शास्त्रातिक्रमः। पित्रानुज्ञातस्य करणेऽभ्युदयस्तु भवत्येव। प्रेते पितर्यकरणात्प्रत्यवेयादित्यलं बहुनोक्तेन॥

औद्वाहिकमिति किमर्थं यावता नह्यौद्वाहिकः शालाग्निरिति। अन्य औद्वाहिकः। अन्यश्च शालाग्निः। एवं तर्हि औद्वाहिकं शालाग्निं कुर्वीतेति ब्रुवन्नेतद्दर्शयति यद्यौद्वाहिकेऽरणिभ्यां मथित्वोद्वाहः कृतस्ते न परित्यक्तव्ये। अत एवोक्तं यस्याभिर्यस्योद्वाहिक एव फलस्नानसीमन्तोन्नयने न कर्त्तव्ये॥ ननु न पुनरपि कथमुपपद्यते? यस्योद्वाहिक एवास्ति ततस्तस्मिन्नेव गार्ह्यं कर्म वैश्वदेवादि कर्त्तव्यं[2] प्रेते पितरि किं शालाग्निविधानेन अत्रोच्यते। औद्वाहिकं शालाग्निं कुर्वीतेति वदन् मुख्येऽसंभवात्तदङ्गे पशुयागे निवेशः। एवं च यः कश्चिदाह ब्रह्मौदनं भवति न भवतीति च तत्प्रत्युक्तम्॥ अन्यत्र तत इत्यादि जागरयेयुरित्यन्तम् अन्यत्रान्यस्मिन्देशे ततस्तस्माद्देशाद्यत्र स पिता ( तुर ) ग्निरासीत् प्रेते पितरि सति प्रज्वलन्तं जागरयेयुरित्यर्थः। बहुवचनं पुत्रबहुत्वापेक्षया॥ पर्वणि पर्व पौर्णमास्यमावास्या ज्यौत्स्नः शुक्लःपक्षः पुण्यनक्षत्र मनुकूलं शुभमाधाननक्षत्रं नवमीं तिथिं वर्जयित्वा। एतच्च प्रेतपितुर्यथासंभवे ज्ञेयम्। जीवत्पितुरवश्यं भवति[3] स्नाता[4] यथाह–जाग्रतः स्नातमग्न्याधेयाङ्गम् अहते वाससी नवे उभयोर्दम्पत्यो भवतः। वाग्यतौ नियमितवाचावरणिपाणी पाण्योररणी गृहीत्वा द्विवचनादेक उत्तरारणिं यजमानो गृह्णीयात्। अधरारणिं पत्नी। '[6]अवकाशे'–अवकाशेऽवगते, प्रकाशे अस्तंगते सवितरीत्यर्थः। प्रेतपितृकस्यान्ते निर्हरणं विधीयते स च यथा पिता दिष्टां गतिं गतस्तथा पित्रग्निरपि मन्थेनानुगमनीयः। एवं चास्तं गते सवितरि इत्युक्तं संहरणात्मको सौ कालः। अक्षतान् यवान्पिष्ट्वा मन्थमायौति करोतीत्यर्थः। अनौ-

१–७ ० घ.। २–३ एतन्मध्यस्थं द्वितीयसूत्रस्य घ. पुस्तकेऽधिकम्। ४–५ इदं घे ( ४ ) सूत्रेऽधिकम्। ६–७ इदं घे ( ५ ) सूत्रेऽधिकम्.।

लम्बं सशरीरिणा—अत एवेषुशलाकोक्ता। एतच्च दशमेऽहनि सायं कर्त्तव्यमर्थादत एव तस्य धारणमुक्तं बहुलं प्रभूतं हिरण्य—अनेन मन्त्रेण मन्थेनाग्निमवसिच्य सोमो राजा अनेन मन्त्रेण कटे कृत्वा कटेऽग्निष्टोमं कृत्वा समारोप्य प्रतिगृह्य प्रहिणोति नयेदित्यर्थः। क्रव्यादमग्निम्—अनेन मन्त्रेण दक्षिणप्रतीचीं दिशं हरेयुरित्यर्थः। सहायतनौ त्रेताग्नीनां ये आयतनास्तैः संयुक्तमित्यर्थः। बहुवचनात्पुत्रैः सह कर्त्तव्यं सन्निवर्त्। सीसेम—अनेन मन्त्रेण सीसमुपधाने उपस्थानस्थाने न्यस्य क्षिप्त्वा अध्यधि उपर्युपरीत्यर्थः। तेनोपधानदेश उपमीमं तस्मिन्नुपर्याग्न्यायतनास्तेषामुपरितनं विविक्तमग्निमित्यर्थः॥ धाम्नो धाम्न इति तिसृभिरिति स्त्रीलिङ्गात्तिस्र ऋचो ज्ञेयाः। यथा धाम्न इत्येका, उदुत्तमं वरुणपाशमित्येका, सुमित्राणा आप इत्येका, एतास्तिस्र ऋचो ज्ञेयाः। परोगोष्ठं परस्य द्वेषस्य यं गोष्ठं स्थानं तं मार्जयन्ते तत्र मार्जनं कुर्यादित्यर्थः। इरणादप्रतीक्षमाणाः परं देशं प्रत्यायन्ति नलैं नडमयैस्तृणैर्वेतसवृक्षशाखया वा पदानि पदमुद्राणि भूमौ लोपयन्ते उत्सृजन्तीत्यर्थः। मृत्योः पदमित्यनेन मन्त्रेण अनड्वाहमित्यनेन मन्त्रेण लिङ्गादागता अनड्वाहमालभन्त इति चेदग्न्यायतनमग्न्याधेयक्षेत्रमुद्धृत्य लक्षणं कृत्वाऽवोक्ष्याभ्युक्ष्याग्न्याधेयिक्यान् संभारानिति। अग्न्याधेयिक्या अग्न्याधेये ये उक्ताः। पाऽर्थिवग्रहणं वानस्पत्यानिरासार्थम्। तत्रापि उषसिकतवर्जं तूलासिकताश्च पार्थिवत्वात्प्राप्ताः प्रतिषिध्यन्ते। तेषां च निवापे ते च समन्त्रा भवन्त्येव गुणत्वान्मन्त्राणाम्। तथा च यत्र मन्त्रं नेच्छति तत्र प्रतिषेधं करोति तथा तूष्णीं स्रुचौ संमृज्येति इत्येति॥

अरणिभ्यामित्यनुवादः प्राप्तत्वादिति केचित्। अथ प्राप्ते पुनर्वचनं मन्त्रनिवृत्त्यर्थं तेन मन्थनकाले ये उक्ता मन्त्रास्तेऽत्र न भवन्ति। हिरण्यशकलं संभारेषु न्युप्य पूर्वं स्थाप्य प्रागुदयादिति कालनियमः। भूरिति ज्वलभूरितिवचनमग्न्याधेयिकमन्त्रान्तरनिवृत्त्यर्थम्। अत एवमग्न्याधेयेन समानप्राक्पौर्णमासात्। केचिदेव सूत्रं न पठन्ति। यत्र पठन्ति किमर्थं किं सर्वाग्न्याधेय

१-८ ० घ.। १-३ इदं घे (५) सूत्रेऽधिकम्। २ केक्षु, च.। ४-६ इदं घे (६-९) सूत्रेष्वधिकम्। ५ अग्निस्थानं, ग. च.। ७-८ इदं घे (१०-१६) सूत्रेष्वधिकं गनम्। ९ अनुवाच, ख. ग. च.

**गौर्वासः काꣳस्यं च दक्षिणा ॥ १७ ॥ इति द्वितीयपुरुषे प्रथमः खण्डः ॥ १ ॥**

---

धर्मप्राप्त्यर्थमुत नेति विधिः सर्वप्राप्त्यर्थं ततः संभार्यकर्माद्यपि प्राप्नोति। अथ न ततोनर्थकं स्यादुच्यते। नानर्थकं न च सर्वधर्मप्राप्त्यर्थं किं तर्हिपूर्णाहुति ( तौ ) यजमानोपस्थानं समिधोग्न्याधेयेष्टीरन्वारम्भणीयाश्च भवन्तीति। एव-मर्थं भूरितिवचनाद् गार्हपत्यधर्मा भवन्ति। सदा कर्म तु आहवनीयात्सभ्य-मिति वचनात् सभ्यं न तावद्भवति तदभावात्सभ्यकर्माभावः। कृष्णलेष्व-वघातस्येव। एवं च कस्यचिदर्थादधः (!) कस्यचिद्वचनस्य प्रत्याम्नायादिति यथायोगं लक्षितव्यं ग्रन्थविस्तरभयान्नोक्तम् ॥ १६ ॥

'गौर्वासः' गवादेर्दक्षिणाविधानादग्न्याधेयदाक्षिणानिवृत्तिः॥ व्या-ख्यातं मया भट्टाष्टावक्रदेवेन पुनरुक्तमपि किंचिदत्रास्ति तदर्थागतमिति न चोदनीयः ॥ १७ ॥

इति पूरणव्याख्याने द्वितीयपुरुषे प्रथमः खण्डः ॥ १ ॥



---

१-३ ० घ. । २ भ्या, ग. ।

# द्वितीयः खण्डः

प्रागुदञ्चं लक्षणमुद्धत्यावोद्त्य स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरस्रं वाग्निं निर्मथ्याभिमुखं प्रणयेत् ॥ १ ॥

'प्रागुदञ्चं' लक्षणं मण्डलं चतुरस्रं वा स्थण्डिलं गोमयेनोपलिप्य। उद्धत्यावोद्त्य लक्षणं कृत्वा प्रागुदञ्चरेखाभिप्रायेण गृह्यान्तरदर्शनात्। पञ्च प्राच्यो रेखा उदीच्येका प्रथमा। अन्यस्तु नैव गृह्यान्तरापेक्षा यतः स्वपरिशिष्ट एव युक्तम्—

रज्जुः शयार्द्धषष्ठा[सा]साङ्गुला तनु(र्)याज्ञिकी

चतुर्षु षडङ्गुलोनेषु लक्षणमाह—सार्द्धे च शये सपादेऽन्यत(:)—

षडङ्गुल्यूनाश्चत्वारः प्राचीपश्चात्त्रयः शयाः।
पूर्वार्द्धेऽर्द्धतृतीयाः स्युः सा वेदिः पाकयाज्ञिकी॥

अपिवा—रात्र्यङ्गुलं शयमित्वा(ता) सर्वतः परिलेखयेत्।
धिष्ण्याय(म्) तत्र प्रकुर्वीत यवोनानि चतुर्दश॥
खण्डमण्डलयोश्चैव त्रिभागमवशेषयेत्।
खर-प्रमाणा रेखाः स्युरुदीची प्रथमा भवेत्॥
पञ्च प्राच्यस्ततो लेखा दक्षिणे चोत्तरेण तु।
दक्षिणे चोत्तरे चान्ये तयोर्मध्ये तु पञ्चमी॥
लेखानामनुपूर्वेण देवताः संप्रकीर्त्तिताः।
पृथिव्यग्निश्च वायुश्च सोम इन्द्रः प्रजापतिः॥
लक्षणे तु कृते तस्मिन्नग्नेः प्रणयनं भवेत्।

इति तत्र रज्जुस्तावत् कर्त्तव्या अर्द्ध(:) षष्ठ(:) यस्याः सा सार्द्धपञ्चशया इत्यर्थः। साङ्गुला अङ्गुलैकेनाधिका तनुस्तन्वी नातिस्थूला याज्ञिकी यज्ञियतृणमयी कुशमयी मुञ्जमयी वा चतुर्षु षडङ्गुलोनेषु लक्षणचतुर्षु प्रकृतत्वात् शयेषु षड्भिरङ्गुलैरूनेषु लक्षणं चिन्हं कुर्यादितिक्रियापदस्या-

ध्याहारः । लक्षणमिति केचिन्न पठन्ति तदा लक्षणमर्थाद्बोद्धव्यम् । सार्द्धे शये द्वितीयं सपादे तृतीयम् । षडङ्गुलू(लो)नाश्चत्वारः शया यस्याः सा तथा तथोक्ता वेदिरिति पश्चात्पश्चार्द्धे त्रयः शया यस्याः सा पूर्वार्द्धे पूर्वस्मिन्देशेर्द्ध-तृतीयो यस्याः सा तथोक्ता सा वेदिरिति सा एवंविधा पाकयज्ञिकी पाकयज्ञेषु भवतीत्यर्थः ॥

**द्विगुणा शतसाहस्रे कोट्यां पञ्चगुणा स्मृता ।**

केचिदेतत्पठन्ति—शतसाहस्रे लक्षहोमे । कोट्यां कोटिहोमे सावित्री-कल्पे भवतीत्यर्थः । अपि वा सत्र्यङ्गुलमिति सुबोधाः । धिष्ण्यन्त आयतनं तत्र तस्यां वेद्यां प्रकर्षेण प्रयत्नेन कुर्यादित्यर्थः किं परिणाममित्याह—यवेनोनानि चतुर्दशाङ्गुलानि मित्वा यवश्चतुर्भागोङ्गुलस्यावयवशब्दत्वात् सत्र्यङ्गुलमिति अङ्गुलशब्दप्रकृतत्वाच्च चतुर्दशाङ्गुलानि ज्ञेयानि सर्वतः परि-लेखयेत् । प्रकृतत्वात्सर्वतः परिलेखमुल्लिखेत् । खण्डमण्डलयोश्चेति खण्ड-शब्देन वेदिरुच्यते । तयोरन्तरे खण्डं कृत्वा मण्डलमिति परिवर्त्तुलं द्वितीय-मुच्यते तयोस्त्रिभागं तृतीयं पश्चादविशेषयन् खरं कुर्यादित्यर्थः । खरप्रमाणाः खरसामान्याः शेषं सुबोधम् । एवमुक्ते लक्षणे सति किमिति गृह्यान्तरदर्शन-मुपन्यस्यते । [1]अरे एतदेव तत्र तत्राह प्राचीनं मध्यमाद्वंशादपरान्हे लक्षणं करोति इत्यादावत एव चेह सूत्रितं 'स्थण्डिलं गोमयेनोपलिप्य' मण्डलं[3] वर्तुलं चतुरस्रं वा चतुःकोणं चेत्युभयदा[2](था)लक्षणार्थमिति मयैवाभिहितम् । अग्निं निर्मथ्य विद्यमानेऽग्नौ मन्थनमयुक्तम् । सोमे अदृष्टार्थं चेत्सर्वस्थाली-पाकेषु स्यात् । एतेन स्थालीपाकातिदेशाद्वक्ष्यमाणं चानुमहदग्नावेवं विधानेन मन्थनार्थं वचनं स्थालीपाकस्याप्यस्य रुषस्वतीव प्रायश्चित्तत्वं स्यात् ॥ नाप्युध्धृत्याग्निं पुनर्लक्षणकरणाभिमुखं प्रणयनं मन्थनस्यापि योगशिष्टत्वं-(ष्टं तु) प्रणयनं पुनरेव स्यात् । अस्माच्छालाग्निकरणात् । शालाग्निविधा-नानन्तरमेव प्रागुदञ्चमित्यादि, युक्तं चैतद् दक्षिणादानानन्तरमेव पूर्वम् । इदं तु द्वितीयदेशसंस्कारादि पुनर्मन्थनप्रणयनयोर्वाग्नेयस्य स्थालीपाकस्य च प्रकृतत्वादग्न्याधेयत्वावगते (:) यद्यत्र तुल्यकार्यत्वाद्विकल्पः पूर्वेणाप्यग्निः [4]सं-

१—९ ० घ. । २—० च. । ३ मण्डलं मण्डलम्, ख. च. । ४—० ख. ।

स्क्रियते दक्षिणादानपर्यन्तेन प्रागुदश्चेति समुच्चयाङ्गाङ्गिभावौ तु न कल्प्येते लभेते यत्रा ? शुद्धभावस्याग्निमन्थनदर्शनात् । न मध्यव्यवस्था यदि एकादशेऽन्हि प्रागुदश्चविधानेनाग्निं निष्पाद्य प्राग्वा····दि कुर्यात् पूर्वविधानं स्यात् । पूर्वविधानेनाप्येकादशेऽन्हि स्यात् । स्मृत्यन्तरात्तद्वा(द्वाद)शे वा स्यादिवासौ ( ? ) ( दिवसे ) अपरान्हे तु चिन्तयेत् । ब्राह्मणं निमन्त्रयेत् तत्र चतुः प्राश्यं च कारयेदिति । अथ वा जागरणमात्रस्यैव बाधः । प्रधानकालानुग्रहात् यथा सद्यः कालया पौर्णमास्या यजेतेति पर्वणीत्यादावरणिपाणी जागरणस्यार्थवत्वं द्वादशेऽहनि इति बर्हिराख्यातवान् वाग्यता नाम काचिद्बर्हिग्रन्थान्तरत्वात् । अत्रैव किमिति न स्यात् । द्वादशेहनि श्राद्धविधानादेकादशेहन्येवस्याद्विकल्पो वा द्वादशेहनि श्राद्धं विदधद् ज्ञापयते आदशाहं यावत्र्याणामेव वर्णानामाशौचं स्यादेकादशेहनि श्राद्धादेरुत्कर्षात्स्मृत्यन्तरविरोधान्नेति चेत्स्मृत्यन्तरमनुसरति । एकादशेऽहन्येव स्याद्विकल्पो वा द्वादशेहनि श्राद्धं विदधदेवं ज्ञापयति । नास्त्येकान्ते जन्माग्निधारणमितरथोद्वाहिके तन्मते श्राद्धं महायज्ञश्च । एकादशाहवदन्यस्मिन्काले न स्युः । ततश्च जीवत्पिता नोद्वाहिकं धारयेदेकादशेहनि श्राद्धादेरदर्शनात् कर्मप्रयुक्तत्वावधारणं तेषु विकारात् कुतस्तदिति येनोक्तमेकादशेन्हि यन्मासान्तमैन्द्रियस्यावां वा कुर्यात्तस्य श्राद्धवेलायां किमसौ काके ( कैर् ) भक्षितो न च द्वादशे हनीति नियमार्थं साग्नि श्राद्धाधिकारित्वं तु परार्थत्वात् । राजन्यवैश्ययोरपि प्रसङ्गात् । अन्यस्तु अग्निमन्थनं प्रवचनवद्दर्शयति । यदि यथा श्रोत्रियो दर्शपौर्णमासयोराहवनीयस्योद्धाराङ्गभूतयोः सान्तयोरग्निमन्थनं तेन यथातन्त्रोक्तमुव····त्स्वशने भुक्ते गार्हपत्यादाहवनीयं ज्वलन्तं प्रणयतीति यथारात्रिनिर्मथ्याभिमुखं प्रणयेदिति प्रथमोर्द्धं लुप्यते येन स्थालीपाकानां ते[3] प्राप्नोति भवतु को दोषः । यथा तत्र सर्वेषां विकृतीनां पवमानेष्टिप्रभृतीनामाहवनीयस्योद्धारः । एवमिहापि सर्वविकृतीनामग्निमन्थनमिति को विरोधः । अदृष्टार्थत्वप्रसङ्ग इति चेत्तत्र तर्हि का वार्त्ता तस्माद्यथाहवनीयस्योद्धारः । एवमिहापि सर्वप्रसङ्गेन । यस्तु ? मौनवददृष्टार्थत्वमाशङ्क्य तैन्न तर्हि मिथ्यावदत्रा(?)ग्निं मथित्वा अग्नेः प्रक्षेपः । अपि तु लक्षणमुद्धृत्यावोक्ष्याग्निं मथित्वा

१–९ ० ग. घ. । २–० च. । ३–० ख. । ४ तत्र तर्हि मिथ्याघदरात्राग्निम, च. ।

**दर्भाणां पवित्रे मन्त्रवदुत्पाद्याग्नेयꣳ स्थालीपाकꣳ श्रपयति ॥ २ ॥**

---

[1]प्रणयेदित्युक्तं यथानुष्ठानं दृश्यते लोके तत्र किं वयं कुर्मः कमुपालभते ॥ शास्त्रस्यार्थस्तावदीदृग्विज्ञायते नापि लोकस्य शास्त्रविरुद्धमनुष्ठानं यतस्तत्रापि नित्यधारणमस्ति तथा चोक्तं च शुश्रुवान् ब्राह्मणो ग्रामणी राजन्यो बहुपुष्टो वैश्यस्तेषां नित्यधृत इति । एवं यथा तत्र नित्यधारणं तथेहापि भवतीति न कश्चिद्विरोधः । अत एव पौर्णमासी पूर्वायुक्ता यागे तथाऽमावास्यायामिति प्रागेवोक्तम् । पूर्णत्वमप्युपवासपौर्णमासीमदर्शनेऽमावास्यायामित्यभिधाय पुनरुक्तं पूर्णे चन्द्रमस्युपवसेत्पौर्णमासीमदर्शनेऽमावास्यामुपवसेत् । पूर्वे च पौर्णमास्यमावास्ययोर्ये पूर्वे तिथी चतुर्दश्यौ तयोश्चोपवसथं कुर्यादित्यर्थः । एवं च कृत्वा शालायां पौर्णमास्य(स्याम)मावास्यायां दर्शपौर्णमासौ कुर्वन्ति । यस्तु (येतु) शाखान्तरीये नानुतिष्ठन्ति मैत्रायणीयानां चोपालम्भं कुर्वन्ति ते श्रोत्रिया वराकाः कुतः सम्यक्शास्त्रार्थपरिज्ञानं तेषामथपरस्परयोः शास्त्रार्थानुष्ठानं तेषां यत एवं श्रूयते–दर्शेऽदर्शने यजेत । पौर्णमास्याममावास्यायां यजेतेति पूर्वा चापौर्णमास्यमावास्ययोर्दर्शपौर्णमासौ कुर्वन्ति । यस्तु शाखान्तरीयलोके प्रसिद्धेऽन्तरा प्रतिपदिश्च ? लोकः। खा ?। तदेवं पौर्णमास्यां यागार्हायामग्न्याधानादि उपक्रम्य प्रतिपादि[3]तमथ वा चतुर्दश्यामुपक्रम्य पौर्णमास्यामेव प्रधानानुष्ठानमिति श्रु[4]त्यर्थमनुष्ठितं भवति इति भगवता मानवकेनोक्तम् । पूर्वे चेति नाम चित्रो यूपस्य स्वरूं कुर्यादितिवत्[2] ॥१॥

'**दर्भाणामिति**' षष्ठी दर्भास्तरणे यः पाश्चात्येभ्यः पवित्रे समे प्रदेशमात्रे छिन्नाग्रे दर्भेण छिनत्ति वैष्णवे स्थ इति मन्त्रोऽधीयत इति मन्त्रग्रहणे च पूर्ववत् ।[6] अन्यस्तु ओषध्या व्रीह्यादिना मन्त्रवद्ग्रहणादिहान्यत्तूष्णीं दार्शपौर्णमासिकं भवतीति दर्शयति । आग्नेयमग्निदैवत्यं स्थालीति गृह्यसंबन्धात् स्थाल्यां पच्यते स्थाल्यामिव वा पच्यत इति स्थालीपाकं श्रपयति । अन्यस्तु गृह्ये स्थालीपाकः । एव भवति नतु पुरोडाश इत्युक्तः स्यादिति ॥ २ ॥

---

१–९ ० घ. । २–३ ० ग. च. । ४ पुनस्तद, च. । ६ कं तन्त्रं, घ. ।

पवित्रान्तर्हितेऽप आनीय तण्डुलानोप्य मेक्षणेन प्रदक्षिणं पर्यायुवञ्जीव तण्डुलꣳ श्रपयति ॥ ३ ॥ घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्योत्तरत उद्वासयति ॥ ४ ॥ इमꣳ स्तोममर्हत इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य पश्चादग्नेरेकवद्बर्हिस्तृणाति ॥ ५ ॥ उदक्प्राक्तूलान्दर्भान्प्रकृष्य दक्षिणाꣳस्तथोत्तरानग्रेणाग्निं दक्षिणैरुत्तरानवस्तृणाति ॥ ६ ॥ दक्षिण

---

कथमित्याह–' पवित्रान्तर्हिते ' पवित्राभ्यामन्तर्हितमन्तर्द्धानं पवित्रापवित्रे अन्तर्द्धायेत्यर्थः। अप उदकमानीयासिञ्च्य तण्डुलानोप्य प्रक्षिप्य मेक्षणेन प्रदक्षिणं पर्यायुवन् सव्यमाक्षालयन् जीवतण्डुलमीषत्स्विन्नं श्रपयतीति वाक्यपूरणार्थं पुनरुक्तम्। अन्यस्तु जीवतण्डुलमिति जीवसंयुक्ता व्रीह्यन्तःस्थिताः सन्तः प्रसवसमर्था न तु दग्धबीजभावा अबीजभावा अन्यन्तता उदकोदधिनाथाः खलादौ स्थिता दग्धबीजभावाय वेत्यर्थयति दुःश्रिते हविषि प्रायश्चित्तं श्रूयते. ॥ ३ ॥

' घृतेनानुत्पूतेन ' घृतस्योत्पवनं स्याद्यदि न प्रतिषिध्येत नवनीतेन वोत्पूतेनेत्यन्त्यपठितमुभयशेषमाशङ्क्यते। अन्यस्तु घृते सिच्यमाने आज्यार्थे घृतेनानुत्पूतेनाश्रितमभिघारयेदविद्यमाने तु नवनीते। विद्यमाने च तेन मन्त्रादुत्पूतेनेति वाभिघारयेत्। अनेनैव च न्यायेनाज्ये प्रतिवासयमेव न ते धर्मा विज्ञेयाः। श्रितं श्रपितमभिघार्येत्युक्त्वा उत्तरत उत्तरस्मिन् स्थानेऽग्नेर्देशमुद्वासयति अवतारयति ॥ ४ ॥

'इमं' स्तोमपूर्वसंस्काराग्नेऽर्चिष्मादयो ये(य इ)त्यनुग्राहकस्थालीपाका इतरयापसरणे गुणमाह–उदक्प्राक्तूलान्दर्भान् उत्तरान्प्रकृष्टान् दर्शस्थानात्। प्रागग्रान् पश्चार्द्धे स्तीर्त्वा ततस्तरणात् प्रकृष्य प्राक् स्तीर्त्वा दक्षिणान्दर्भांस्तथोत्तरांश्च दर्भान्प्रकृष्य दक्षिणैः प्रकृष्टैर्दर्भैरुत्तरान्प्रकृष्टान्दर्भानवस्तृणाति आच्छादयति। अग्रेणाग्निं प्रकृष्यशब्दात् ॥ ५ ॥ ॥ ६ ॥

'दक्षिणतोऽग्नेः' आसनास्तरणादि स्यात् ब्रह्मणे संस्तरणसंबन्धात्। अपरं यजमानायेति व्यपदेशाद्धिगम्यते मन्त्रकारवत्। स्वयंकर्तृकान्यपि

---

१–३ ० ग. । २–३ ० घ. । ४–५ ० घ. ।

**तोऽग्नेर्ब्रह्मणे सꣳस्तृणात्यपरꣳ यजमानाय पश्चार्द्धे पत्न्यै ॥ ७ ॥ उत्तरतः सꣳस्तीर्णे पवित्रे स्रुक्स्रुवावाज्यस्थालीं प्रक्षाल्य सꣳस्तीर्णे द्वे द्वे प्रयुनक्ति ॥ ८ ॥ तूष्णीं दक्षिणत आज्यं निरूप्य मन्त्रवत्पर्यग्निं कृत्वा तूष्णीꣳ स्रुक्स्रुवौ संमृज्यादब्धेन त्वा चक्षुषाऽवेक्ष इति पत्न्याज्यमवेक्षते ॥ ९ ॥**

गार्ह्याणि केषांचित्तदपि स्याद्विकल्पे सं्व्यवसाया वा यदा रिद्धिज्ञा ? स्यात् यत्र शब्दविहितमत्र नित्यं स्यात् न विकल्पः । ऋत्विगव्यङ्ग इति यथा पश्चार्द्धे । दक्षिणत इत्यधुना प्रदर्शितः पश्चादिति पत्नी स्वयं साक्षात् पश्चात्तस्य कर्तृभ्र्यः ॥ ७ ॥

'उत्तरतः' अग्नेरिति गम्यते । 'विनानसादृश्यार्थं ? । संस्तीर्णे पश्चात्संस्तीर्य पवित्रे द्वे स्रुवौ द्वौ स्रुक् च स्रुवश्चेति गृह्यशेषि (विगृह्यैकशेषि) समासः सरूपाणां मध्ये एकशेषोऽस्ति यथा क्षौमे वसानाविति । लोकेऽपि कुस्थाने मयादे (?) रुभयथेति । अन्यस्तु सा-मरक्षणयोः स्रुवेण जुहूर्लक्ष्यते तथा च श्रौते स्रुव (:) जुहूरुपभृद् ध्रुवा इति स्रुवेण सह जुहूप्रयोग उक्तः । एतदेव मनसि कृत्वा स्रुचाविति द्विवचननिर्देशोऽत्र प्रयोग उक्तो भगवता आचार्येण । आज्यस्थाली आज्यधानी प्रयुनक्ति । दृष्टो दारुचिः । तच्च फलंताम्रपलाशादिकम् । अष्टसभिधमित्यष्टौ समिधः । ताश्चेध्मसमानवृक्षस्य भवन्ति ॥ ८ ॥

'तूष्णीम्' वाऽऽज्यस्थाल्यादि धर्मपरिप्राप्त्यर्थं तूष्णीं ग्रहणं मन्त्रवत् स्थालीपाकस्य पर्यग्निकरणं गृह्यान्तरादन्वेष्टव्यमनवश्रितस्य हि हविषः पर्यग्निकरणचोदना । अन्यस्तु सामान्येन सर्वबर्हिषामिध्मादीनां पर्यग्निकरणं बोद्धव्यम् । इंध्मस्य हविष्टं (ष्ट्वं) युक्तं ब्राह्मण वाक्ये प्रेध्ममुख्यंति प्रहविरिध्म इति मन्त्रपर्यग्निकरणे परिवा जपति परिधि तूष्णीं स्रुक्स्रुवौ संमृज्य तूष्णीं ग्रहणाद्वेदप्रख्यादिष्वपरादि संमार्जनं प्रक्षेपनं संमार्जनम् 'अदब्धेन त्वा' मन्त्रवदिति वक्तव्ये अदब्धेनेति वैचित्र्यार्थम् ॥ ९ ॥

१-२ ० घ. । २ स्ता, च. । ३-४ ० घ. । ५-६ ० घ. । ७-८ ० घ. । ९ दृष्टा दारवी, घ. । १० लं, घ. । ११-१२ ० घ. ।

**तूष्णीमधिश्रित्योपाधिश्रित्य पश्चादग्नेरुपसाद्य मन्त्रवदुत्पूयावेक्षते ॥ १० ॥ तेजोसीत्याज्यं यजमानोऽवेक्षते ॥ ११ ॥ आज्यस्थाल्यां स्रुवं निधायाग्रेण स्थालीपाकमन्वायातयत्यपरेण मेक्षणम् ॥ १२ ॥ तूष्णीं प्राश्चमिध्ममुपसमाधाय ब्रह्माणमामन्त्र्य ओं जुहुधीत्युक्ते दक्षिणेन हस्तेनान्तरेण जानुनी**

'**तूष्णीमधिश्रित्य**' अग्नावाज्यमित्यर्थः। उपाधिश्रित्य तस्मिन्नेवाग्नौ पूर्वार्द्धे भवशब्दात्पश्चाद्वर्हिषी सादयित्वा मन्त्रवदुत्पूयावेक्षतिसमानकर्तृकत्वादध्वर्युरवेक्षते। यद्वा यजमानकर्तृकपक्षोप्यस्ति दर्शयति न वा पूर्वत्वादध्वयोरवेक्षणं कुतस्तेजोसीत्याज्यं यजमानो वेक्षत इति। सन्नियोगशिष्टो मन्त्रकर्तृविशेषो मन्त्रवदिति वचनादवगम्यते तस्मादवेक्षतेर्ह्यर्थकल्पनातो वरं स्वयंकर्तृकत्वकल्पा (ल्पना) गृह्यान्तरदर्शनात्। अन्यस्तु मन्त्रवदुत्पूयावेक्षते सर्वमध्वर्युकर्तृत्वं यजमानस्य तु तेजोसीत्यनेनैवावेक्षणमुत्पवनं विष्णोर्मनसेत्यादिना श्रौते दर्शनात्। इध्ममुपसमाधाय कुत एतत् यत्प्राश्चमिध्ममुपसमाधाय वैतसमिध्ममुपसमाधायेति सति गुणविधिपरे वाक्ये इध्मशब्दोनूद्यते इतरथोभयविधाने वाक्यद्भिद्येत तस्मात्प्रकृताविध्मोस्तीति केनचिद्व्याख्यातं तदसत्। नह्यप्राप्तविधानेऽनेन गुणविधौ वा वाक्यभेदो दुष्यति यथागरणिसोद्यन्ते स्थालीपाकस्यामाकति ?। तथा च गृह्यान्तरेषु केषुचित् नैवेध्माः पठ्यन्ते। तस्माद् गृह्यान्तरादिध्मोपसमाधानमात्रमित्यवैम्यहं युक्तं च शाखान्तरादेवोप(य)मं ग्रहणं वैतसमिदमितिविकृतौ दर्शितम्। अन्यस्तु तूष्णीमिध्ममुपसमाधायेति केचित्पठन्ति न केवलमत्र यावत्पूर्वत्रापि पात्रप्रयोगे अष्टादशां दार्विध्ममिति व्याख्यातश्च यया। अत एव विकृतौ दर्शनमुत्पन्नम्। ब्रह्माणमामन्त्र्य ब्रह्मन् होष्यामिति ओं जुहुधि ब्रा(ब्र)ह्मणा एव जुहुधि यज्ञमित्यादि केचिन्नेच्छन्ति प्रकृतिविकाराभावादिति सर्वत्रशब्दो ब्रह्मत्वसूत्रेऽस्ति एषोऽनुज्ञातः सर्वत्रेत्यतोऽत्रापि स्यादित्यन्ये। अन्यस्तु एतस्मिन्नेव वा परत्र व्या ? सूत्रान्यन्येन व्याख्यातानि। अहं तु व्याख्यास्यामि चरूंन्तसचारयत्यपरेण

१-२ ० घ. । ३-४ ० घ. । ५ ब्राह्म, घ. । ६ चरूं, घ. ।

**प्राङासीन आघारौ जुहोति प्राजापत्यमुत्तरार्द्धे प्राञ्चं मनसा ऐन्द्रं दक्षिणार्द्धे प्राञ्चमेव ॥१३॥ अथाज्यभागौ जुहोत्याग्नेयमुत्तरार्द्धे सौम्यं दक्षिणार्द्धे समावनक्षणौ ॥१४॥ युक्तो वह यदाकूतमिति**

मेक्षणं तूष्णीमिध्ममुपसमाधाय ब्रह्मणानुज्ञातश्चरून्[1]त्संचारयति श्रितानि[2] पूर्वमुत्तरोत्तरत[3] उद्वासितानि छान्दसो बहुवचनो द्रष्टव्यः (?) विवक्षया वाधिकृत्य यक्षं वा तान्युत्तरतो देशान्तरं संचार्यन्ते प्रयोगप्राशुभावाय तत्र किंचिद्दक्षिणं देशं नयन्ति । केचिदाहुः स्रुक्स्रुवाणां पश्चात् स्थाप्यते श्रौते यथा दर्शनात् तथा च तत्रोक्तमपरेण स्रुक्[4] दण्डापात्रीमिति । एतेनापरेण मेक्षणमात्मन इति केचित् । अन्यः स्रुक्स्रुवादीनामपरेण मेक्षणस्याप्रधानत्वात्तदा एवार्थात् पूर्वेण स्रुचादीनां चरुसंचरे तूष्णीमिध्मा[5]ः समाधायेत्यर्थः [6]समानोत्तरेत् मेक्षणस्याप्रधानत्वात्[7] ? अन्तरेण जानुनी बाहू कृत्वेत्यध्याहारः स्मृत्यन्तरात् । अन्यस्तु सामर्थ्याद्वाहू ज्ञेयौ तयोरेव योगाधाने जानुमध्यसंयोगसंभवात् । प्राक् प्राङ्मुखः । आसीन उपविष्टः । दक्षिणेन हस्तेन स्रुवादि गृहीत्वा अन्तरेण सव्ये जान्वोरित्यर्थः । आघारौ जुहोति कथमित्याह–प्राजापत्यं मनसा संबन्धो[9]न्नं[10] इन्द्रायेति [11]देवतासंगतिर्नोर्ध्वोध्वर इति[12] मन्त्रः। प्राणाद्दक्षिणार्धे इत्यपूर्वविधिः। आघारौ जुहोति सामान्योपदेशः पूर्ववदेतस्य मते अन्तरेण[13] जानुनी इति न पूर्वशेषः प्रकरणधर्मत्वात् ॥ १० ॥ ॥ ११ ॥ १२ ॥ १३ ॥

'आज्य' आग्नेयमुत्तरार्द्धे सौम्यं दक्षिणार्द्धे समानवक्षणया साम्यश्चौ। अकुटिलतया अन्यस्तु समानौ सदृशापेक्षावित्यर्थः । छन्दोवत्सूत्राणीति छान्दसो वा निर्देशः । अध्येतृप्रमादाद्वा विपरीतः पाठः ॥ १४ ॥

'युक्तो वह जा' इह पठितव्यो विवाहे वा । ज्वलनात्मकस्याग्नेर्भवस्तदा महात्मानमग्निं योजयित्वाऽध्यस्येत्यर्थो[14] [15]मे निर्देशः । अध्येतृप्रमा[16]

१ चरुं, घ. । २–४ ० घ. । ३ मन्तरतः, ख. । ५ ध्मं, घ. । ६–७ ० घ. । ८ ध्यान, च. । ९–१० ० घ. । ११–१२ ० घ. । १३ न, च. । १४ र्थेम्, ग, च. । १५–१६ ० घ. ।

**द्वाभ्यामग्निꣳयोजयित्वा नक्षत्रमिष्ट्वा नक्षत्रदेवताꣳ यजेत्तिथिं तिथिदेवतामृतुमृतुदेवतां च ॥ १५ ॥ उपस्तीर्याप उपस्पृश्य मेक्षणेन स्थालीपाकस्यावद्यति मध्यात् पूर्वार्द्धाद् द्वितीयं पश्चार्द्धात्तृतीयꣳ यदि पञ्चावदानस्य ॥ १६ ॥ अवत्तमभिघार्य स्थालीपाकं प्रत्यभिघारयति ॥ १७ ॥**

---

अ[1]ध्येस्येत्य[2]र्थमेव योजयिता [3]तस्य चोदितत्वात् । नक्षत्रमिष्ट्वा षडेते यागा एतैरेवशब्दैर्योगः । ननु कृत्तिकादिभिः । अथ कृत्तिकाभिस्तदाष्टाविंशतिराहुतयो नक्षत्रेभ्यः षड्ऋतुभ्यः पञ्चदशतिथिभ्यस्तावत्य एव तद्देवताभ्यः स्युः नक्षत्रादीनामवचनात् तत्त्वादेके बहु नक्षत्राय स्वाहेति युक्तं सर्वनक्षत्राण्येव इष्टानि भविष्यन्ति । यथा विश्व[4]स्मै भूतायेति वर्त्तमानकालीनं नक्षत्रादि यष्टव्यमित्यत्र किंप्रमाणमेकवचनं चेन्न सामान्यविवक्षयाऽपि [6]पूज्यते । तदत्र शाखान्तरनिर्णयः । [7]तिथिदेवता प्रतिपदं स्वाहेतिवदना (ता) तिथीनां चन्द्रमाः अ[थ]वा शास्त्रान्तरात् ब्रह्मादयः । ऋतुमृतुदेवतां शास्त्रान्तरप्रसिद्धा वा अन्येनार्तवस्तेभ्यः स्वाहेति वदता दर्शिता तस्यास्तु सर्वं चेदालूनविशीर्णमिव प्रतिभाति अयं शक्त्यो(क्यो)[8]र्थः । नक्षत्रमिष्ट्वा यस्यां तिथौ यन्नक्षत्रं तदेव स्वेन नामधेयेनेति तस्यैवात्मीया देवता [9]श्रुत्युक्तायतना हि सामान्येनादेशो भव[10]ति । यथा नाग्न्यादयो देवता देवशब्देनेज्यन्ते । अपित्वग्न्यादिशब्देन तथा नक्षत्रादीति द्रष्टव्यम् ॥ १५ ॥

'उपस्तीर्याभिघार्य' स्रुचिस्रुवेण अप उपस्पृश्योदकं स्पृष्ट्वा मेक्षणेन समिधा शृतस्थालीपाकस्य ओदनस्यावद्यति । उपसृज्योपस्तीर्यानयति मध्यादन्तरात् पूर्वार्द्धात्पूर्वभागाद् द्वितीयं द्वयोः पूरणं पश्चार्द्धात्तृतीयं त्रयाणां पू[11]रणमवद्यति अ[12]त्र संबन्धः । पञ्चावदानकल्पस्य जामदग्न्यादेरवत्तमभिघार्याज्येन प्रत्यवघारयत्येवाखण्डित[13]मभिघारणं कृत्वा ॥ १६ ॥ १७ ॥

---

१–४ ० घ. । २ र्थो, च. । ३ म, च. । ५ श्चाव, ग, च. । ६ ० ग, च. । ७–८ अलग्नः पाठः, ० घ. । ९–१० ० घ. । ११ पूर्वे, ख. ग. च. । १२ रात्र, ख. ग. च. । १३ संधारणं, ख. ।

**अग्नये स्वाहेति मध्ये जुहोति ॥ १८ ॥ यो देवानामसीति रौद्रस्य ॥ १९ ॥ जयान्हुत्वाज्यस्य स्विष्टकृते समवद्यत्युत्तरार्द्धात्सकृद् द्विमात्रम् । द्विर्वा यदि पञ्चावदानस्य ॥ २० ॥ अवत्तं द्विरभिघार्य नात उर्ध्वꣳस्थालीपाकं प्रत्यभिघारयति ॥ २१ ॥ अग्नये स्विष्टकृते स्वाहेत्यसꣳसक्तमुत्तरार्द्धपूर्वार्द्धे जुहोति ॥२२॥ मेक्षणं दर्भाꣳश्चाधायानुमतिभ्याꣳऽव्याहृतिभिश्च त्वं नो अग्ने, स त्वं नो अग्ने अयाश्चाग्नेऽसीत्येताभिर्जुहुयात् ॥ २३ ॥ वि ते-मुञ्चामि रशनाꣳ वि रश्मीनिति च हुत्वा पवित्रेऽनु प्रहृत्याज्ये-नाभिजुहोति ॥ २४ ॥ एधोऽस्येधिषीमहीति समिधमादधाति समिदसि समेधिषीमहीति द्वितीयाम् ॥२५॥ अपो अद्यान्वचा-**

---

अग्नये आज्यभागयोर्मध्ये जुहुयादित्यर्थः । किं चेति यो देवा अनया ऋचा रौद्रस्य स्थालीपाकस्य मध्ये यदि विकृतौ रौद्रो न स्यादिहैव द्वितीयो रौद्रः स्थालीपाकः प्राप्यत इति स्यात् ॥ १८ ॥ १९ ॥

'जया' जयष्टक (?) त्रयोदशाहुतिका आकूताय स्वाहेत्यादि स्विष्ट-कृते समवद्यति इति निगदसिद्धम् । अन्यस्तु समवद्यति सहिताभ्यामाज्य-स्थालीपाकाभ्यामित्यर्थः । उत्तरावदुत्तरस्य देशात्सकृदेकेनैव प्रयत्नेन द्विमात्रं द्विगुणमवदानात् । अवदानश्चाङ्गुष्ठपर्वमात्रः श्रौतादवगन्तव्यः । द्विर्वा द्वौ वा यदि पञ्चावदानः स्यात् । यजमान इत्यर्थः ॥ २० ॥

अवत्तं गृहीत्वेति स्रुचि द्विरभिघार्य द्विरभिघारयेदिति नात ऊर्ध्वं स्विष्टकृतादुत्तरकालं स्थालीपाकं प्रत्यभिघारयेदित्यर्थः । उत्तरार्द्धपूर्वार्द्धे तु उत्तरस्मिन्देशे असंसक्तः सर्वाभिराहुतिभिर्जुहुयादित्यर्थः । एतेन मयैव व्या-ख्याता अनेन व्याख्याताः पठिताः ॥ २१ ॥ २२ ॥

'मेक्षणैः' अग्नेरितिशेषः अनु (ना ग.) अनुमतिदेवताभ्यामृग्भ्यामन्वद्य नोऽनुमति रंतिमहु इति च व्याहृतयः । श्रुक्रिये पठ्यते । गृह्यान्तरे च भूः स्वाहेतिप्रभृतयस्त्वन्नो अग्ने हुत्वेति पवित्रे अपवित्रे अभिव्याप्य ते आहृत्य यथा तथा जुहोति । निगदमन्यत् ॥ २३ ॥ २४ ॥

'एधोस्येति' आदधतीति बहुवचनात्पत्न्याद्यादध्यात्तूष्णीमव-

---

१–२ अन्विदमनुते त्वं, घ. ।

**रिषमित्युपतिष्ठते ॥ २६ ॥ आपोहिष्ठीयाभिर्मार्जयेत् ॥ २७ ॥ पूर्णपात्रं दक्षिणा ॥ २८ ॥ बर्हिरनुप्रहरति ॥ २९ ॥ एतेन[1] स्थालीपाकेन स्थालीपाकाः सर्वे[2] व्याख्याताः ॥ ३० ॥ इति द्वितीयपुरुषे द्वितीयः खण्डः ॥ २ ॥**

---

भृथवत् । 'अपो अद्य' अग्निमभिदधतीत्यर्थः । आपोहिष्ठीयाभिरापोहिष्ठ-शब्दवतीभिरित्यर्थः । मार्जयन्ते पावयन्त्यात्मानम् ॥ २५ ॥ २६ ॥ २७ ॥

पूर्णपात्रमासि[3]तं भव दक्षिणा ब्रह्माध्वर्युभ्याम् । पूर्णपात्रमित्युत्तरपद-प्राधान्यम् । पात्रस्यैव पूर्णपीठरादेर्दानं तण्डुलादे[4]र्द्रव्यस्य पूरणार्थत्वात्[5] गुणत्वम् । अन्यस्तु यद्यप्युत्तपदप्राधान्यं तथा द्रव्यस्य तण्डुलादि दानं मन्तत्वादर्थ(?)स्तस्यैव प्राधान्यमन्यश्च[6] द्रव्यस्य परिमाणार्थत्वेन पात्रस्योपादा-नमिति गुणभूतेत्र मात्राद्रव्यस्य प्रदेयत्वान्मतिमेयत्वाच्च प्रधानभूतत्वेन[7] ॥२८॥

'बर्हिरनुप्रहरति' अग्नौ प्रक्षिपतीत्यर्थः । एतेनातिदेशसूत्रमिद-मनुपदिष्टकर्मकयो(का ये) अग्नीषोमीयप्रभृतयः स्थालीपाकास्ते एवंधर्मकाः[8] । स्थालीपाक उपलक्षणं[9] ततो वा कर्मादयोप्येवंधर्मका इति एवं च प्राक्पक्ष-कृतालिङ्ग इत्यत्र केनचिद्व्याख्यानं महता प्रयत्नेन कृतमिध्म(ध्माना)मुपसमा-धानार्थं स्थालीपाकाद्यजमानस्य प्राशनार्थं च । अत्र तु वार्त्तोऽपि ते न श्रुता आज्यस्थाल्यां स्रुवं निधायाग्रेण स्थालीपाकमन्वापातयति अपरेण मेक्षणमिति प्राङासीन आघारा इति आख्यानजयन ब्राह्मणमित्येतेषु इत इध्ममुपसमाधायेत्यादिकं[10] चिरं तन[11]ैरपठितत्वादन्येन तु अन्येषां मतमुक्तं नात्र-पवमानादयः स्थालीपाका भवन्तीति अपठितत्वादित्यभिप्रायः । सत्यं तथापि गृह्यान्तरेऽग्न्याधेयदेवताभ्यो जुहुयादिति वचनाद्यदि क्रियते न दोषः । अथातः सर्वार्थमिदं सूत्रम् । अतन्त्राभावे परे[11] इति परमतम् । अप्रति-षिद्धमनुमतमिति सर्वशास्त्रेषु निश्चितमिति अन्येषूक्तं मया तत्रैव यथा पवमानादयो भवन्ति[12] ॥ २९ ॥ ३० ॥

॥ इति पूरणव्याख्याने द्वितीयपुरुषे द्वितीयः खण्डः ॥

---

१ अनेन, ग. च. । २ सर्वत्र, घ. । ३ शि, घ. । ४ तण्डुलोदरादे, ख. ग. च. । ५ देर्, ख. । ६ अव्यश्च, ग. च. । ६–७ ० घ. । ८–१२ ० घ. । ९ कर्पट, ख. । १०–० ग. च. । ११ परत, च. ।

## तृतीयः खण्डः

अग्नये स्वाहेति सायं जुहोति प्रजापतय इति द्वितीयाम् ॥१॥ सूर्याय स्वाहेति प्रातः प्रजापतय इति द्वितीयाम् ॥२॥ अग्नीषोमीयः स्थालीपाकः पौर्णमास्यामैन्द्राग्नोऽमावास्यायामुभयत्र चाग्नेयः

'अग्नये' सायं प्रदोषे द्वितीयेति मनसा स्यात्। प्राजापत्यविधानं गुणत्वान्मानसस्य। अत्र होमे देवतामात्रं श्रूयते कालश्च तस्माद्द्रव्यं दध्यादि आवृत्यात्। अग्निहोत्रवत् तूष्णीं स्यात्। ऐषा चातुर्हायनद्विहायनइत्येवमाद्यविरुद्धम्। पश्चाद् गृह्यान्तरात्तण्डुलादि द्रव्यं ग्राह्यं परिसमूहनपर्युक्षणपरिस्तरणमात्रं च द्रव्यस्य [3]श्रवणे व (च) पाणी(णि)[4]नों होमः। अपूर्णत्वान्नतु जयान् प्रभृति तन्त्रस्य लिङ्गमस्ति सूर्याय प्रातर्व्युष्टायां शर्वर्यां[5][6] गार्हपत्यहोमसादृश्याभावात्समिद्धैवताभिरिति[8] सायंप्रातरिति कालनियमात्सायं प्रातरिति यावज्जीवं होमो विधीयते। एवं च स्वयं होमादि ऋत्विजोनुपदेशादेरतिदेशाच्च। महायज्ञत्वाद् द्वादशमुक्तं होमनिमित्तं दैवतं इति ॥ १ ॥ २ ॥

'अग्नीषोमीयः' भवतीति शेषः। पौर्णमास्यमावास्ययोश्चन्द्रतिथित्वात्तत्कालं ज्योतिः शास्त्रादवगम्य यजेत न तु चतुर्दशीप्रतिपदोरनिमित्तत्वात्। उभयत्र—उभयोः पौर्णमास्यमावास्ययोरित्यर्थः। आग्नेयोऽग्निदैवत्यः स्थालीपाको भवतीति। अयं च पाठक्रमाद् द्वितीयः स्यात्। न दर्शपौर्णमासदेवतावचनात्स एव क्रमो युक्तः। तस्मादीज्यदेवतावचनात्स एव क्रमो युक्तस्तस्मादाज्यस्योपांशुयाजी यष्टव्योऽनभिधानादेव पाठक्रमविरोधाच्च। यद्वा उत्तरोत्तरयोः पूर्वसूत्रेण लाघवार्थं तर्हि तत्सुतरां च दर्शपौर्णमासक्रमवन्न—क्रमाश्रया देवताः स्युस्तयोरनभिहितमध्युपांशुमग्न्याधेयपवमानादि स्थालीपाकवत्कुर्यात्। शाखान्तरदर्शनाच्च[11]। अन्य आह चकारादुपांशु चाज्येनेति

१—९ ० घ. । २—० ग. । ३—४ प्रस्रवणे वहत्यपाणौ वा होमः, ख. । ६ सवारं ? ख. ग. च. । ७—८ ० घ. । ९ दैव, ग. च. । १०—११ ० घ. ।

**आगन्तुः पूर्वः पौर्णमास्यामुत्तरोमावास्यायाम् ॥३॥ आश्वयुज्य पौर्णमास्यां प्रातर्नित्येषु स्थालीपाकेषु स्थालीपाकमन्वायातयति ॥४॥ तस्याग्निꣳरुद्रं पशुपतिमीशानं त्र्यम्बकꣳशरदं प्रषातकं गा इति**

---

तस्यायमाशयः । आग्नेयश्चेति वक्तव्ये उभयत्र चेति मध्ये चकारकरणम-क्रमेण ततो ज्ञायते स्थालीपाकानन्तरमाज्येनोपांशु विश्वादि यजेत् । [1]अत्वा-मिशयेति तदुक्तं ततो यथार्थ कर्मसन्निपातो विज्ञेय इति किं पुनर्यथार्थं दर्शपौर्णमासचोदनाप्रायमस्यम(अ)न्यस्तु पुनर्देवतादि वचनादिह नोपांशु-याज(ग)स्तथा च गृह्यान्तरे साक्षात्प्रतिषेधः । उपांशु याजेन्द्रमहेन्द्रवर्ज्जमिति उक्तोऽतिदेश एतेनेत्यत्र इदमपि कालनियमाद्यावज्जीवं स्यात्[2] ॥ आगन्तुः पूर्वः पौर्णमास्यामुत्तरोमावास्यायाम् । आगन्तु नैमित्तिकं शान्त्यादि नित्यं वाग्रयणादि पर्वसु यद्विहितं तत्पौर्णमास्याः पूर्वं कर्त्तव्यम् । अमावास्याया-मुत्तरं पौर्णमास्यमावास्ययोरित्यत्र कर्मणि । आगन्तुशब्दात्कर्मण आगन्तु-र्भवति । [3]आगन्तूनामन्ते निवेश इत्यत्र शब्दानतिदेश्यते[4] आगन्तुर्निविशति ततश्च देशकालकर्त्रैक्याच्चोदनाभेदे सबर्हिराघारादि जयत्प्रभृतिषु तदादि तन्त्रं वक्ष्यति संघेष्वेकवद्बर्हिरित्यत्र । यत्र त्वेका चोदना चोदितसंघात्तत्र बर्हिरा-देस्तन्त्रत्वं कर्मेत्यादि सिद्धमेव न निर्वपेत् । एवमागन्तुककर्मादा उपस्थाने क्रमार्थं वचनमागन्तुः पूर्व इति तत्रापवादः ॥ ३ ॥

'**आश्वयुज्यामित्यादि**' [5]नित्येष्विति कोयं भेदो यावता त्वया उत्पद्यमानोऽपि नित्य एवाहृत्य विधेयकृतो न [6]नित्याकृतिरिति नित्येष्विति बहुवचनं यदा तस्यामाग्रयणं स्यान्नित्यं वा शूलगवाभिप्रायेणेति । अनु पश्चादायातयति अपयतीत्यर्थः । यदि नित्ययोरन्वायातयति इति ब्रूयादागन्तुः पूर्वः पौर्णमास्यपवादकं न स्यात् । आग्रयण—स्थालीपाकान्वायातने नियमा-र्थतया चरितार्थत्वादिति नित्येष्विति बहुवचनम् ॥ ४ ॥

'**तस्याग्निरुद्रम्**' इति शब्दश्चार्थे [7]तस्यात्ययान्यस्यावचयाग्न्या ? [8]चे[9]ति प्रयजति[10] ॥ ५ ॥

---

१ दत्वा, ग. । १–२ ० घ. । ३–४ ० घ. । ५–६ ० घ. । ७ स्याम, ख. । ८–९ ० घ. । १० ( तस्य अग्निं ''' प्रषातरुनिमित्तं पूर्वमाभ्युदयश्राद्धं षड्दै-वत्यचरुनिर्वापः । अग्नये स्वाहा १ '''' शरदे स्वाहा ६ ) अधिकं, घ. ।

**यजति ॥५॥ दधिघृतमिश्रः प्रषातकस्तस्या नो मित्रावरुणा[1] प्रवा- ह्वेति[2] च हुत्वाऽम्भः स्थाम्भो वो भक्षीयेति गाः प्राशापयति ॥६॥ अवसृष्टाश्च वसेयुः ॥७॥ ब्राह्मणान् घृतवद्भोजयेत् ॥८॥ नानिष्ट्वाग्रयणेन नवस्याश्नीयात् ॥९॥ पर्वणयाग्रयणं कुर्वीत**

---

'दधिघृतमिश्र' दधिघृतमिश्रस्तस्या नो मित्रावरुणा इति पठितोऽपि पृषातको द्रव्यं न देवतासंज्ञाविधानार्थस्तेन यत्र पृषातकशब्दः श्रूयेत तत्र दधि- घृतमिश्रसंज्ञः प्रत्येतव्यः। ततश्च देवगणमध्ये शरदं पृषातको द्रव्यं न देवता- संज्ञा विधानानर्थक्यप्रसंगात्। गणमध्य आहुतिक्रमार्थपाठात्। तस्यानेन पिण्डपितृभ्यामृग्भ्यामेकाहुतिश्चकारस्य मन्त्रसमुच्चयार्थत्वात्तस्थालीपाकस्य गोभ्य इति अन्यस्तु देवतावद् द्वितीया तस्य पाठाद् देवतैव। अन्यथा लाघवार्थं तत्रैव दधिघृतमित्याह। ब्रूयादेवं द्विः पृषातकं कर्त्तव्यं भवेत्। अत्र नोद्यं द्वितीयाहुतिर्यो देवानामसीति स्यात्। रौद्रस्थालीपाक इति अनवस्था[3] नहि शाखाध्येषणं प्रतिपत्तिस्तस्मात्प्राशयति प्रतिमन्त्रेण वा प्रयोजयेदित्यर्थः। हुत्वाम्भस्थेति पृषातकहोमतच्छेषप्राशनयोरानन्तर्यचोदना तत्कथं स्विष्टकृदादि प्रतिपद्यते न किं पृषातकस्य तत्रोपकारोपेक्षित्वमस्ति बाढं यजति यागानु- क्रमार्थं हि पाठो न यजति यागार्थत्वाद् द्रव्यस्य यस्तुवै प्रत्ययः स यागा- पेक्षयानन्तरं प्राशनस्याहृतेन यागाङ्गत्वं प्राशनस्य यथा वाजपेयाङ्गत्वं बृहस्पतिसवस्य ॥ ६ ॥

'अवसृष्टा' सा काले यद्येव प्राशनमपि वासकलस्तु। अस्तु यदिह होमानन्तरं होमस्तु प्रातर्नित्येष्विति एवं गाः। अत्र वासकारेणास्ति[4] अन्यस्तु प्राशनाङ्गत्वाद् गावः कालं गृहान्नोत्सृज्यन्ते ॥ ७ ॥

'ब्राह्मणान्' घृतवतीध्मे वैतसगुणवद्भोजने गुणविधिनोत्सर्गस्था-[5] लीपाके बहून् ब्राह्मणान् भोजयेत् ॥८॥ नहि ब्राह्मणभोजनानुवादेन बहुत्वं[6] घृतवत्वं च गुणद्वयविधानं संभवति। एवं तर्हि अपूर्वत्वाद् ब्राह्मणभोजनमपि

---

१ वरुण, ग. च.। २ व इति, ग. च.। ३ जयेत्प्रेरये, ध.। ४ सकरेण, ग.। ५ चो, ख. ग. च.। ६ त्वात, ग. च.। ७ गुणे, ग. घ. च.।

**वसन्ते यवानां शरदि व्रीहीणाम् ॥ १० ॥ अग्रपाकस्य पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति सजूरग्नीन्द्राभ्याँ स्वाहा सजूर्विश्वेभ्यो देवेभ्यः स्वाहा सजूर्द्यावापृथिवीभ्याँ स्वाहा सजूः सोमाय स्वाहेति ॥ ११ ॥ शरदि सोमाय श्यामाकानाँ वसन्ते-**

---

विधीयतेऽत्रे । यद्वा ग्रहणादि स्थालीपाकाङ्गाद् ब्राह्मणाभिप्रायं बहुवचनं तेषामपि पृषातकसंबन्धात् । कांस्यभोजिवद् घृतवदित्यविरुद्धं नित्ये ! मुत्तरं नित्येष्विति स्यात् । छन्दोनुविधानाद्वा सप्तमी माषादेरपि नवस्याशितव्यसामान्योपक्रमात् । देवा ओषधीषु पक्कास्विति पर्वणि वसन्ते शरदि वेत्येवम् । इतरथा सर्वदा पर्वण्यादिग्रहणं स्यात् । द्रव्यविषमार्थं वसन्तशरदोः पुनर्विधानं स्यात् । अतो यथासंभवं तथाऽत्विँ(स्त्वि)ति । अन्यस्तु नानिष्ट्वाग्रहणे नवस्याश्नीयादिति केचित्पठन्ति तस्यायमर्थः । नवान्नप्राशनाधिकारग्रहणमिति तेनावश्य कॅर्त्तव्य मित्युक्तं भवति । अन्ये आश्वयुज्यां च न तथेति तथाहि देशविशेषेषु क्वचिद्ग्रीष्मेषु व्रीहय एध्यन्ते शिशिरे यवाः क्वचिदन्यस्मिन्निति तस्मात् शरद्वसन्तयोः पर्वणी इत्येकवाक्यताँ ॥ ९ ॥ १० ॥

'**पयसी**' त्यादि सुगमं सजूः सोमाय स्वाहेति श्यामाकानां स्थालीपाकस्येति शेषः स्थालीपाकप्रक्रमात् ॥ ११ ॥

'**वत्सः प्रथमजो दक्षिणा**' प्रथमजात इत्यर्थः । ब्राह्मण एव यजमानभागोपि क्षत्रविड्भ्यः प्रापितं तु न लभ्यते । यदि बह्वृचाद्यभिप्रायं श्रुतिग्रहणमिदम् । अथ [ भुञ्जीतेति ] भोजनभागिति श्रुतिस्तदा भागप्राशनं केचिदिच्छन्ति नेत्यपरे ॥ " तस्मिन् वर्षे यजमानस्य गवां मध्ये यः । प्रथमो जातो वत्सः स एव दक्षिणा । अस्य नवयज्ञकर्मणः समृध्यर्थमिमं प्रथमं वत्सं"

---

१ ० ग, च. । २ चित्य ? ख, ग, च. । ३ वसि, ख, च. । ४ त्ति, ख. । तृप्ति, घ. । ५ कर्मक, ख. । ६–७ ० घ. । ८ भोजनतीभागीति ? ख, ग, च. । ९–१० अधिकं, घ. ।

वेणुयवानामुभयत्र वाज्येन ॥ १२ ॥ वत्सः प्रथमजो दक्षिणा ॥१३॥ ब्राह्मण एव हविःशेषं भुञ्जीतेति श्रुतिः ॥ १४ ॥ इति द्वितीयपुरुषे तृतीयः खण्डः ॥ ३ ॥

---

तंति( तन्नि ) षक्रतौ द्रव्यं वाऽध्वर्यो तुभ्यमहं संप्रददे । ब्रह्मणे पूर्णपात्रं कर्मापवर्गे । नवयज्ञस्याकरणे महान् दोषः स्यात् । कात्यायनेन प्रायश्चित्तमुक्तम् "अनिष्ट्वा नवयज्ञेन" ॥ १२ ॥ १३ ॥ १४ ॥

॥ इति पूरणव्याख्याने द्वितीयपुरुषे तृतीयः खण्डः ॥ अन्ये तु चतुर्थः ॥ ३ ॥



# चतुर्थः खण्डः

पशुना यक्ष्यमाणः पाकयज्ञोपचाराग्निमुपचरति ॥ १ ॥

पशुबन्धवत्तूष्णीमावृद्देवताहोमवर्जम् ॥ २ ॥

---

षट्सु षट्सु मासेष्वाग्रायणः पशुबन्धोऽपीति भविष्यत्कालतानुपपत्तिस्तत्र मध्येऽग्न्यपशुना यक्ष्यमाणं पाकयज्ञोपचारमग्निमुपचरति पशुनेत्याधिकारार्थं वचनं यक्ष्यमाण इति भविष्यत्कालतानुपपत्तिस्तत्र मध्येऽग्न्युपचाराद्यजमान इति निर्देशो युक्तः। [१]अपरं भविष्यः स्यादिति चेत्तन्न स्थालीपाकधर्मत्वात्पाकयज्ञोपचारः स्यादेव प्रधानाहुतेः प्राग् यक्ष्माणोपदेशः स्यात्। अन्यस्तु—यक्ष्यमाण इति वचनाद्यक्ष्यमाणं यष्टुमिच्छुः पशुयागबुद्ध्योपारूढा[२] सम्यक् पाके यज्ञविधानेनाग्निमुपचरेदिति पूर्वमग्निं मथित्वा लक्षणं कृत्वा प्रणयेदित्युक्तं भवति। तेन यथा स्थालीपाकसाध्ये दर्शपौर्णमासयोर्योगे गार्ह्येऽग्निमन्थनं तथात्रापीत्यर्थः। पाकस्तनुरुच्यते तनुयज्ञोपचारमुपचरति कर्मत्वात् क्रियाविशेषणमुष्ट्रमुखन्यायेन वा द्वितीयोपचारमग्निमिति द्वे विशेषणपदे अस्मिन्मते स्यातां नोत्तरवेदिप्रणयनं न होतृप्रभृतयो न याज्यानुवाक्या नोपभृन्नाप्युपवसथ इति पाकयज्ञोपचारवाक्याद् गम्यते योऽयं पुरस्तादपवादः ॥ १ ॥ "[३]अथ पाकयज्ञपशोः पदार्थानुक्रमणिका लिख्यते तथा च मानवसूत्रे षट्सु षट्सु मासेषु पशुना यजेत संवत्सरे संवत्सरे वेति। पशोः कालनियमः। मनुः (४–२८) नवेनानर्चिता इति तस्मादल्पसंभारतमेनापि पशुबन्धः कर्त्तव्य एव। तत्रादौ विधिना नान्दीमुखं श्राद्धम्। ऋत्विग्वरणम्[४]" ॥ १ ॥

'पशुबन्धवत्' तूष्णीमावृदिति प्राप्तेः पशुवत्तूष्णीमावृद्देवताहोमवर्जं सापवादातिदेशः। तत्र पशुबन्धेन तुल्यावृत् पशुबन्धवदित्यतिदेशात्तूष्णीं कार्यं देवताहोमं च वर्जयित्वा देवतामग्निं केचिदाहुरनादिष्टदेवतास्वग्निमिति वचनात्। इन्द्राग्नी अपरे पशुबन्धवदित्यतिदेशात्तदयुक्तमिव प्रधानानतिदेशादग्निहोत्रदर्शपौर्णमासाग्रायणदेवतासाम्यात्पशुमिह यज्ञवत्स्यात्। न चेद्देवताप्रधानयोगत्वादतिदेशः स्यात्। ऐन्द्रवायवादि ग्रहण एव सोमविकारः। षड्होत्रादि होमो नेष्यते यैस्तैरुपाकरणहोमः कथमिष्यते। यतो नोपवसथा-

---

१ आरम्भ, ख. घ. । २ बुद्ध्युपा, ख. । ३–४ अधिक, घ. ।

**प्रोक्ष्यानुमान्योपपाय्य पर्यग्निं कृत्वा शामित्रं प्रणीय वपाश्रपणीभ्यामुदञ्चं प्रक्रममाणमन्वारभन्ते ॥ ३ ॥ संज्ञप्यमानमवेक्षते ॥ ४ ॥ संज्ञप्तᳲ स्नपयित्वा यथादैवतᳲ वपामुत्कृत्य श्रपयित्वाऽऽघारावाज्यभागौ हुत्वा—**

---

ङ्गत्वादतिदेशः स्यादैन्द्रवायवादिषड्ढोत्रादिहोमः ॥ २ ॥ " सर्वं श्रौतवन्मन्त्रवर्जम् " ॥

' **प्रोक्ष्यानुमान्योपपाय्य पर्यग्निं कृत्वा** ' परिसंख्यानार्थमिदं क्रमार्थेऽन्यागुणोत्तरविध्यभावाच्च । इतश्च यावदुक्तं गृहमेधीयाज्यनिर्वापादिवदन्यनिवृत्त्यर्थत्वात् । अन्येन तु यद्व्यञ्जनपरतयाऽव्याख्यानार्थं व्याख्यातं तन्न निष्प्रमाणत्वात् । अत एव तद्विपरीतं व्याख्यातमन्येन पृष्टजनं लिखता । प्रक्रममाणमिति भविष्यति । वर्तमानोपदेशो वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वचनात् । संज्ञप्यमाने च विध्यर्थं गुणार्थं वा संज्ञापरिमितत्वात् ॥ ३ ॥ ४ ॥ " तूष्णीं पशोः प्रोक्षणमनुमानयति स्तौतीत्यर्थः । तूष्णीमप उपपाययति तूष्णीं सर्वाङ्गेषु पशोः प्रोक्षणम् । उत्तरतः शामित्राय लक्षणं करोति । उद्धत्यावोक्ष्य । अथ तूष्णीं पर्यग्निकरणं शालाग्नेरुल्मुकेन पशुमग्निं यूपं शामित्रलक्षणे उल्मुकं निधाय··· त्रिः पर्यग्निं करोति । अध्वर्युरुल्मुकेन सहितः । यूपात्प्रमुच्य पशुं गृहीत्वा उदञ्चं प्रक्रमयति । वपाश्रपणीभ्यामुदञ्चं प्रक्रममाणमन्वारभते । उल्मुकं शामित्रलक्षणे निदधाति । पशुशमित्रे प्रदाय तस्मिन् शमिता प्रत्यक् शिरसमुदक्पादमन्तरे वोष्माणं संज्ञपयति[१] ॥ " ॥ ३ ॥ ४ ॥

' **संज्ञप्तम्** ' इदमपि पूर्वपरिसंख्यार्थो वागतिक्रमः स्यात् । यस्तदुपाध्यायो विपरीतमुक्तवान्[२-३] । यथादैवतं वपा अमुकदे त्वाजुष्टमिति मन्त्रेण इन्द्राग्निभ्यां त्वाघाराज्यभागौ हुत्वा जातवेदो वपयेति वपां जुहोति व्याख्यानं पूर्ववत् । दर्भाग्रोपासनं हुत्वा तूष्णीं वपति होमत्वात् प्रत इति मन्त्रः । इध्माघारादि ऋतुमृतुं देवतान्तं पशुबन्धवदित्युक्त्वा स्रुक् स्रुच्युपस्तीर्य हिरण्यशकलं[१२] वपां हिरण्यशकलान्यवदायाभिः स्रुवेणोपरिवपां[१३] ? जुह्वा वपां जुहोति । पुनः परिवप्य अपरे आज्यभागौ हुत्वेति परिसंख्यां मन्यन्ते ।

---

१ देवतं, घ. । २–३ अधिकं, घ. । ४ न, घ. । ५–६ ० घ. । ७–८ अधिकं, घ. । ९–१० ० घ. । ११ द, घ. । १२–१३ ० घ. ।

**जातवेदो वपया गच्छ देवाꣳस्त्वꣳहि होता प्रथमो बभूव । घृतस्याग्ने तन्वा संभव सत्याः सन्तु यजमानस्य कामाः स्वाहा । इति वपां जुहोति ॥ ५ ॥ स्वाहा स्वाहेति परिवप्यौ[1] ॥ ६ ॥ स्थालीपाकमन्वायातयति समानदेवतं पशुना ॥ ७ ॥**

तेषां स्थालीपाकावसरे हुतावाज्यभागाविति पुनःप्रसङ्गनिवृत्तिवाक्ये कथमिध्मोपसमाधानाद्याज्यभागवर्ज्जमृतुदेवतोक्तं[2] परिसंख्या तस्य वचनमनुप्रमाणाप्रवृत्तिः परिसंख्यानं प्रयोगाङ्गस्य स्वकालेभ्युपगम्[3]याकालविधानं न युक्तम् । न च पशुवदतिदेशादिध्मः । आघारे च वपाहोमादूर्ध्वंस्युस्तदाज्यभागौ हुत्वेत्युपलक्षणं यथा जयप्रभृतिभिर्हुत्वेति न जयेभ्यः पूर्वाहुतयो लुप्यन्ते नाप्युत्तर एवमत्रापि युक्तमकृतावाज्यभागाविति विकल्पे प्राप्ते नित्यार्थं वचनमाज्यभागौ हुत्वा ॥ ५ ॥—"[4]संज्ञप्तं स्नपयति । पत्न्यासिञ्चति । पशोः सर्वाङ्गस्पर्शनं वपामुत्कृन्तन्ति । इन्द्राग्निभ्यां त्वा वपामुत्कृन्तामीत्यनेन इषेत्वेति वपामुत्खिदति । एकशृङ्ग० अन्तराग्निं यूपं च वपाहरणम् । अग्नेर्दक्षिणत उपविश्य वपाश्रपणम् । अग्नौ दर्भाग्रनिरसनम् । उपेतानामन्यतम आज्येन वपामभिजुहोति । शृतां ज्ञात्वा वपाश्रपण्यौ प्रवृहति । वपां पात्र्यां दक्षिणतो बर्हिषि सादयति । शमिता पशुं विस्रंसयति । तूष्णीं प्राञ्चमिध्ममुपसमाधायेत्यादि ऋतमृतुदेवतान्तम् । ततो वपा होमः । स्रुच्युपस्तीर्य । ततोऽभिघारयति । स्वाहा देवेभ्य इति पुरस्ताद्वपाया जुहुयात् । जातवेदो वपया गच्छदेवानिति वपां जुहोति । विश्वेभ्यो देवेभ्यः स्वाहा इत्युपरिष्टाद्धोमः । अग्नौ तूष्णीं वपाश्रपण्यौ प्रहरति । ततो ब्राह्मणभोजनम् । अस्य वपाहोमकर्मणः समृद्ध्यर्थम्[5] ॥ ५ ॥ ६ ॥

'स्थालीपाकं' पुरोडाशनिवृत्त्यर्थं पुनर्वचनं हुतावाज्यभागौ ननु हुतावेव[6] काशङ्का कृताकृताविति कश्चिद्विकल्पं मन्येत । ननु वाज्यभागौ हुत्वेत्युक्ते नानुवादाविशेषाच्च तथापि स्यात्ततश्च विकल्पः स्यात् । भवति च पाक्षिकोऽनुवादो यथा नित्येषु स्थालीपाकेष्विति बहुत्वं स्याच्चैवं किं न

१ वाप्यौ, ग. च. । २ क्तं, घ. च. । ३ म्य, ख. घ. । ४–५ अधिकं, घ. । ६ क्तं ननु, ग. घ. च. ।

**तध्धुतावाज्यभागौ ॥८॥ अनिरुक्तः स्विष्टकृत् ॥ ९ ॥ पाशुबन्धिकानामवदानानां रसस्यावदाय दैवतैः प्रचर्य वसाहोमशेषेण दिशः प्रतियजति यथा वाजिनेन वनस्पतिमाज्यस्य ॥ १० ॥ जयान् हुत्वा त्र्यङ्गाणां स्विष्टकृते समवद्यति ॥ ११ ॥ स्थाली-**

स्यात्तध्धुतावाज्यभागाविति पाक्षिकानुवादे स्थालीपाकाज्यभागार्थः। ततश्च[1] न यदाहुतौ तदा स्थालीपाकार्थं होतव्याविति नैवं स्यान्न्यायसिद्धत्वान्मन्द-[2] बुद्ध्यर्थता सूत्रस्य का(को)न्यतोऽस्ति च विकल्पा(ल्पो) वा वचनमधिकोर्थः ॥७॥८॥ "[3]स्थाली० पशुना। स्थालीपाकं श्रपयति शृतमभिघार्य उत्तरत उद्वास-[4] यति अवदानधर्मेण स्थालीपाकमवद्यति। इन्द्राग्निभ्यां त्वेति जुहोति" ॥७॥८॥

'**अनिरुक्तः स्विष्टकृत्**' अग्नये स्वाहेत्यर्थः ॥९॥ "[5]स्विष्टकृद्धर्मेणास्विष्टकृतमवद्यति। अनिरुक्तः स्विष्टकृत्। स्विष्टकृच्छब्दवर्जम्। अग्नये स्वाहेत्यसंसक्तमुत्तरार्द्धपूर्वार्द्धे[6] जुहोति" ॥ ९ ॥

'**पाशुबन्धिकानामवदानानाम्**' पशुबन्धानामवदानानां हृदयादीनां रसस्य वपुषो वदाय उपस्तरणादि[7] क्रमे स्रुचि। दैवतैः प्रचर्य इन्द्राग्निभ्यां स्वाहेति हुत्वा। वसाहोमशेषेण दिशः। अर्थाद्वसाहोमात्प्राग्देवताहुतेर्वनस्पतिमाज्येन यजतीतिशेषः ॥१०॥ "[8]पाशु० रसस्यावदाय हृदयादिभ्यः पश्वङ्गेभ्यः प्लक्षशाखाया अधि स्वधितिना द्विर्द्विरवद्यति। इन्द्राग्निभ्यां स्वाहेति जुहोति प्रधानाङ्गशेषाणि प्रधानाङ्गैः सह जुहुयात्। वसाहोमशेषेण दि[शः]प्रतियजति यथा वाजिनेन। वसाहोमहवनीं गृहीत्वा दिशः स्वाहेति दिक्षु पूर्वार्धादुपक्रम्य प्रदक्षिणं पञ्चमेन मध्ये षष्ठेन पूर्वार्द्धे। वनस्पतिमाज्यस्य। सकृदवदाय वनस्पतये स्वाहेति जुहोति[9]" ॥ १० ॥

'**जयान् हुत्वा**' दक्षिणा सर्वे च मध्ये स्थालीपाकस्य पाठात्। न ततोनन्तरं यंजवसाप्रापणीयां[10][11] स्विष्टकृते समवद्यति त्र्यङ्गैः स्विष्टकृता यजतीत्यर्थः। अङ्गाहुतेरुर्द्धं[12] जयाहोमः। व्रताहुति ऋतुदेवता तेऽपि सुतन्त्रमध्ये स्थालीपाकस्य पाठात् ततोनन्तरं जयाय च पूर्वमाघारादि[13] स्थालीपाकेन शेष-

१-२ ० घ. । ३-४ अधिकं, घ. । ५-६ अधिकं, घ. । ७ हिरण्यादि, ख. ग. च. । ८-९ अधिकं, घ. । १०-११ ० घ. । १२-१३ ० घ. ।

**पाकेन शेषो व्याख्यातः ॥ १२ ॥ पशोः पशुरेव दक्षिणा ॥ १३ ॥ इति द्वितीयपुरुषे चतुर्थः खण्डः ॥ ४ ॥**

उद्यतेऽनुमतिरित्यादि पशोः। ननु वरोऽपि पशुरेव स[1] च पशुबन्धवदित्युक्त्वा सजातीयः। पशुः पशोर्दक्षिणेति पुनरुक्तः। यद्वा प्रकृतावधि वरेण सहेयं दक्षिणा विकल्प्यते पशोरित्यधिकारार्थत्वात्[2]। [3]अनन्तर कर्ममण्डलं चतुरस्रं वा स्थण्डिलं गोमयेनोपलिप्य लक्षणे च विधाय परिसमूहनादि बर्हिस्तीर्त्वा ब्रह्माद्यासनानि पात्राणि प्रयुनक्ति प्लक्षशाखां वपाश्रपण्यौ द्विगुणारशनामवदानश्रपणी स्वधितिपवित्रे स्रुचं स्रुगाज्यस्थालीरित्येकादश पशुदात्र्यादीनि च शूलाक्षनियूपाहुत्यादि अङ्गुलिमात्रपूर्वं च खाला(ता) विद्यन्ते। प्रयुनक्ति स्थालीपाकयोरुपकल्पनामिध्मवन्न तु प्रयोगानां मूलात्। अन्यस्तु तदुपेतकल्पनमुक्तमया आज्यनिर्वपनादि तेजोसीत्यवेक्षणास्थानमालयोग्यादि पश्च जुहोतीत्यन्नं पश्चादग्न्यादानप्रभृतिनिर्मन्थप्रचारे लुप्यते प्रोक्षणादि परिसंख्यानात्। वरदानादि शिरस्यपिधानान्तोपपाशुयोजनान्तप्रोक्षो(क्ष्यो)पपाय्य पुनः प्रोक्ष्य पुनः पर्यग्निं कृत्वा शामित्रमुत्करस्योत्तरतो लक्षणं कृत्वा प्रणीय तत्तदेव प्रक्रम्यमाण वपाश्रपणीभ्यामन्वारभ्यते उल्मुकमग्रतो ननु तुरियशामित्रस्य प्रणीतत्वाद्यु ? पश्चात् स्वरुणार्जनादि वपाश्रपणान्ते इध्ममुपसमाधाय प्रधानस्थाने वपाहोमप्रकारेण तूष्णीमुत्करे मार्जनं बहवो ( बहून् ) ब्राह्मणांस्तर्पयित्वाऽवदानानि श्रपयति सादिते मुख्ये स्थालीपाकमधिश्रित(त्य) पर्यग्निह(क)रणं पुरोडाशस्थानत्वादनिरुक्तास्विष्टकृच्च स्थालीपाकस्य हुत्वा पशुदे[4]वतायै अग्नये च स्विष्टकृत्स्थाने जुष्टां देवेभ्य इत्यादि ··· ष्ट ··· भिघारणान्तं त्र्यङ्गैः स्विष्टकृत्[5]॥ [ इदं पुस्तकत्रयोपलब्धमिति गृहीतम् ] ॥ “ जयान्[6] ··· समवद्यति । स्रुचि उपस्तीर्य दक्षिणस्य कपिलललाटस्येत्यादि त्रिभ्यः स्विष्टकृदङ्गेभ्यः सकृदवद्यति । ततोऽभिघारयति। अग्नये स्विष्टकृते। स्थाली० ···। मेक्षणं दर्भांश्चाधायेत्यादि कर्मसमापनम्। पशोः पशुरेवदक्षिणा अध्वर्युब्रह्मणोः। अस्य पाकयज्ञपशोः समृद्ध्यर्थम्[8] ” ॥ ११ ॥ १२ ॥ १३ ॥

॥ **इति पूरणव्याख्याने द्वि[9]तीयपुरुषे चतुर्थः खण्डः** ॥ ४ ॥



१ सा, ख. ग. च. । २ तृ—अन्यस्तु पशुरेव न पूर्वमात्रमपि स्थालीपाकनिमित्तकमित्यवधारणार्थम्, ख. । ३–६ ० घ. । ४ व्या, ख. । ५ ङ्गौ, ग. च. । ७–८ अधिकं, घ. । ९ पञ्चम, ख. ग. च. ।

## पञ्चमः खण्डः

रौद्रः शरदि शूलगवः ॥ १ ॥ प्रागुदीच्यां दिशि ग्रामस्या· सकाशे निशि गवां मध्ये तष्टो यूपः ॥ २ ॥ प्राक् स्विष्टकृतोऽष्टौ शोणितपुटान् पूरयित्वा नमस्ते रुद्रमन्यव इति प्रभृतिभिरष्टभि· रनुवाकैर्दिक्ष्वन्तर्दिक्षु चोपहरेत् ॥३॥ नाश्रृतं ग्राममाहरेत् ॥४॥

---

'रौद्रः शरदि शूलगवः' रुद्रो देवताऽस्य शरदि(दी)ति ऋतुनियमः। शूलगव इति पशुबन्धोनेनैवोच्छ्र ? पशुसिद्धान्नेनावाग्रयणादिवत् नित्यमध्ये विधाने नित्येयं वस्न ? स्यात्तदकरणे प्रत्यवेयम्। अत्र विकारानाह प्रागुदीच्यां दिशि दिङ्नामान्यन्तराल इति बहुव्रीहिः। ग्रामस्येति निशि गवां मध्ये कालदेशगुणनियमा एते तष्टो यूपान् (पः) यूपपक्षे नियमः प्रकृतोऽष्टौ शोणितेन पूरयित्वेति गम्यते। जयान्कृत्वाष्टौ पुटान् प्राच्यादिक्रमेण दिनमस्तेर ? ष्टभिरनुवाकैरुपहरेदुपपरैर्हरेत्स्थापयेन्निवेदयेदित्यर्थः ॥०॥ "प्रौष्ठपदीं रौद्रः शरदि शूलगवः सर्वं पूर्ववत्। विशेषाः कथ्यन्ते। रुद्रो देवता। प्रागु० असकाशे दूरे रात्रौ गवां मध्ये अतष्टो यूपः शूलगवादन्यत्राष्टाश्रिः। अतष्टमूलः। निर्वापः। देवस्य वः। रुद्राय वो जुष्टान्निर्वपामि प्रधानस्थाने यो देवानामसीति। होमः॥ प्राक्....हरेत् प्राच्यादिक्रमेण" ॥ १ ॥ २ ॥ ३ ॥

'शेषं' भूमौनिनयेत्। नाश्रृतं ग्राममाहरेत्। एवं च श्रृतमाहरेदित्यर्थोक्तम्। अपि च चर्म चर्म च नाहरेदित्यर्थः। अयूपानेके। अयूपान् यूपरहितान्। तत्र यज्ञे पशूनेके गृह्यकारा आहुरिति। अत्र यो देवनामसीति स्थालीपाकाहुतेः। रुद्राय स्वाहेति अङ्गाहुतिः। शेषमुक्तम्। अन्यस्तु किमुतैकः पशुर्भवति पुटा( उता )ष्टाविति ननु च एक एव ध्यात इति कुतः संदेहः सत्यमेवं तथापि सूत्रप्रणयनं श्रुत्वास्ति संदेहः यदेवमभिहितं शूलगव इति तत्रेदं विचार्यते किमियं रूढिसंज्ञोतार्थत्व (न्वर्थ) संज्ञा तत्र यदि रूढस्तदा एक एव। अर्थत्व ( न्वथा ) र्थ स्तथाष्टौ। यतः शूलगव इति शूलः संघे[४]

---

१ पुटानि ग—च. । २—४ ०घ. । ३ शुभिः ख. । ५—६ इत्यधिकं घ. । ७ श्रि, ग, घ. ।

**शेषं भूमौ निखनेदपि चर्म ॥ ५ ॥ अयूपानेके पाकयज्ञपशूनाहुः ॥ ६ ॥ इति द्वितीयपुरुषे पञ्चमः खण्डः ॥ ५ ॥**

(घं इ)ति ज्ञायते संघश्च बहुषु पशुषु भवति तत्रैकस्तावद् व्याख्यास्यामः। वयं-तु ब्रूमः। अष्ट भवन्ति कुतः शूलगव इति शूलबहुत्वं गम्यते तच्च पशुबहुत्वे गम्यते। तच्च पशुबहुत्वे(त्वं) भवति बहवोऽपि हृदूयास्तदा भवन्ति तद्बहुत्वे च शूलबहुत्वम्। अन्यथाष्टौ यूप? कृत्वे पठन्ति तस्माच्चाष्टौ पशवो भवन्ति इति गम्यते अष्टौ च शोणितपुटानीत्युक्तम्। तच्च पशुबहुत्वे अष्ट संभवन्ति। एत एवास्य स्वल्पं संभवति प्रचारश्च प्राजापत्यपशुवद् ज्ञेयः। नमः॥ "नाश्रृतं.... अश्रृतम् ऊ वध्यपशुशिरादिकं ग्रामं नाहरेत्। चर्मापि नाहरेत्। सर्वं भूमौ निखनेत् अयूपानेके....। अन्यत्सर्वं पूर्ववत्। इति शूलगवपदानुक्रमणिका समाप्ता॥ अथ पशोः प्रत्याम्नायो लिख्यते। यदि अल्पसंभारतमः। पशुयागं कर्त्तुम-समर्थश्चेत्। तद्दैवत्येन पायसेन स्थालीपाकेन यजेत। प्रागुदञ्चमिति सूत्रे स्थालीपाकधर्मो विहितः स्थालीपाकपक्षे शोणिताभावात्स्थालीपाकमध्यात्। उदकं निःसार्य तेनोदकेनाष्टौ पुटान्पूरयित्वा प्राच्यादिक्रमेण नमस्ते रुद्रमन्यव-इति प्रभृतिभिरष्टभिरनुवाकैर्दिक्ष्वन्तर्दिक्षु सर्वासु दिक्षु प्रक्षेप इत्यर्थः। शेषः स्थालीपाकधर्मेण। इति पशोः प्रत्याम्नायपदार्थानुक्रमः॥४॥॥५॥॥६॥

**इति पूरणव्याख्याने द्वितीयपुरुषे पञ्चमः खण्डः ॥ ५ ॥**



१–२ ० घ.। ३ यत, घ.। ४–५ अधिकं घ.।

## षष्ठः खण्डः

अथातो ध्रुवाश्वकल्पं व्याख्यास्यामः ॥१॥ आश्वयुज्यां पौर्णमास्याम् ॥ २ ॥ ऋत्विगव्यङ्गः स्नातः शुचिरहतवासाः॥३॥ प्रागस्तमयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशेऽश्वत्थस्याधस्तान्न्यग्रोधस्य वाऽपां वा समीपे वेद्याकृतिं कृत्वा तस्यां चतुष्कोणवनस्पतिशाखायामवसक्तचीरायां गन्धस्रग्दाम-

---

अथातो ब्रूमः। 'अथ' शब्दोऽधिकारार्थः। अतः शब्दो हेतौ ध्रुवाश्वमिति कर्मणो नामधेयं तस्य कल्पो विधानं तद् व्याख्यास्याम इति प्रतिज्ञानं वक्ष्यमाणस्य। एवं च काम्यमिदं सामान्येनोपदेशस्य प्रयत्नात्। कामश्चाश्वानां ध्रुवत्वं ध्रुवाश्वमिति नामधेयानुरूपं नित्यपशुप्रसङ्गेनायं काम्य उच्यते येन पुनरेव चोक्तं तस्य नूनं नित्याधिकारादिदमपि नित्यमतः प्रमादाद्वाऽनुक्तावज्ञानाद्वा इतरथा तन्मतानुसारी अनुकुर्वन् प्रत्यवेयात्। आश्वयुज्या तिथिनियममाह॥ "यस्यै यजमानस्य गृहेऽश्वा भवन्ति तस्य यजमानाश्वानां पुष्ट्यर्थमेतत्कर्म करोति ध्रुवाश्वकल्प इति कर्मनामधेयम्" ॥१॥ ॥२॥

'ऋत्विगव्यङ्ग' ऋत्विग् हुतधानार्षेयः। अव्यङ्गो ऽहीनाङ्गोऽनधिकाङ्गश्च ॥ शुचिर्निर्मलो ऽमानो विद्याकायकर्मणा। अहतवासा नवमन्यपूर्वं वासो यस्येति स तथोक्तः॥ "ॐ० अव्यङ्गः। नहीनाङ्गो नाधिकाङ्गश्च। ऋत्विक् शब्देनाध्वर्युरुच्यते। अत्र ऋत्विग्ग्रहणात्स्वयंकर्तृकाण्यपि कर्माणि भवन्ति। स्नातः शुचिरहतवासाः" ॥ ३ ॥

'प्रागस्तमयान्निष्क्रम्य' तिष्ठत्युत्तरतो ग्रामस्य पुरस्ताद्वा अपां वा समीपे कालदिग्देशगुणनियमाः। वेद्याकृतिं कृत्वा प्रकृतत्वात्पाशुक्या वेदेराकृतिः स्यात् तस्यां वेद्यां कृतायां किंविशिष्टायामाह चतुः कोणावसक्तचीरायाम्। चतुः कोणेषु उच्छ्रूवनस्पतेः शाखासु ज्येष्ठिषु अवसक्तान्यवबद्धा-

---

१ तं, ग. घ. च.। २ नोक्तं, ख. ग. च.। ३–४ अधिकं, घ.। ५–६ अधिकं, घ.। ७–८ ० घ. ।९–१० ० घ.

वत्यां चतुर्दिशं[1] विन्यस्तोदकुम्भसहिरण्यबीजपिटिकायामपूपस्रस्तरलाजोल्लोपिकमङ्गलफलाक्षवत्यां सर्वगन्धसर्वरससर्वौषधीः सर्वरत्नानि चोपकल्प्य प्रतिसरदधिमधुमोदकस्वस्तिकनन्द्यावर्त्तवत्यामग्निं प्रणीयाश्वत्थपलाशखदिर[2]रोहितकोदुम्बराणामन्यतम·

---

नि चीराणि चित्रा पताका यस्याः सा तथोक्ता । तथा गन्धाश्चन्दनागरुप्रमुखाः । स्रजः सुमनोमालास्ता एव दामा रास्ना[3]स्तद्वत्यां वेद्यां तथा चतुर्दिशं विन्यस्तपूर्णकुम्भ' सहिरण्यबीजपीटिकायां ' चतुर्दिक्षु सहिरण्याः पूर्णा घटा यस्याः । व्रीह्यादिबीजपूर्णा उ[4]कलभाण्डानि च यस्याः सा तथोक्ता तथा लाजा अपूपस्रस्तरेति चतुर्दशपदत्वधर्मे तुषमण्डकस्रस्तरवत्यां वेद्यां लाजा भ्रष्टव्रीहयस्तद्वत्यां लोपिकपिष्टमयानि च तद्वत्यामक्षता अनवहता व्रीहयस्तद्वत्यां सर्वगन्धवत्यां सर्वरत्नानि यस्यां सर्वौषधिव(म) त्यां ग्राम्यारण्या ओषधयः प्रतिसरवत्यां सूत्रमयः प्रतिसरः । दधिमधुमोदकस्वस्तिकनन्द्यावर्त्तवत्यां मोदकाः स्वस्तिका नन्द्यावर्ता गोधूमविकाराः । एवं विशिष्टायामग्निं प्रणीय । अश्वत्थ खादिररोहिकोपलाशौदुम्बराणामन्यतमस्येध्ममुपसमाधाय तिस्रः प्रधानदेवर्ता इति यजति प्रणीयग्रहणं प्रत्यक्षनयनमग्नेः । अर्चयन्ति । अश्वत्थादीनां समुच्चयः स्याद् द्वन्द्वनिर्देशात्तन्निवृत्यर्थमन्यतमस्येत्युक्तं वेति वाशब्दं पठन्ति । अन्यतमस्य वेति तेषां समुच्चयो वान्यतमस्येति विकल्पः । उच्चैः श्रवसो भवतीति विष्णुमिति स्थालीपाकैः । स्थालीपाके विधिरुक्तः । सायं होमादूर्ध्वं पवित्र उली ?.... चीत्री तत्स्थालीपाकं श्रपयित्वा । ऋतुदेवतान्ते उच्चैः श्रवसे स्वाहा वरुणाय स्वाहा, विष्णवे स्वाहेति स्थालीपाकानामाज्यस्याश्विभ्यां स्वाहा, अश्वयुग्भ्यां स्वाहा जयादितन्त्र [ म् ] समाप्तव्यम् । यतो न पशुसमानदेवता इमे स्थालीपाका वपोत्तरकालीनाः किं तर्हिं अल्पवावचनादपूर्वत्वमित्युक्तं पशुभिश्चेति समानदेवता यजति । अतः पशुविधिः । उच्चैः श्रवसं प्रभृति देवतास्त्रींश्छागानुपाकुर्यादुक्त इध्मः । वपानां युगपद्धोमो मन्त्रैक्यात् । जातवेदो वपादिहोमेषु रुहः ? ( ऊहः ) पाकयज्ञैः

---

१ धि, ग. च. । २ कं, ख. ग. घ. । ३ रास्ता, ख. च. । ४ उदक, घ. ।
५–६ ० घ. । ७–८ ० घ. । ९–१० घ. । १०–११ ० घ. ।

**स्येध्ममुपसमाधाय तिस्रः प्रधानदेवता यजत्युच्चैःश्रवसꣳ वरुणꣳ विष्णुमिति स्थालीपाकैः पशुभिश्चाश्विनौ चाश्वयुजौ चाज्यस्य ॥ ४ ॥**

---

पशोः प्रकृतित्वेऽपि तद्वन्माने इत्यतिदेशान्न किंचिदेतत्। एतवत्या स्थालीपाका अङ्गत्वेन पुनः श्रप्यन्ते। अङ्गैः प्रचर्य अश्विनौ चाश्वयुजी चाज्यस्य जयान् स्विष्टकृत् त्र्यङ्गैरुक्तः। यदि प्रधानान्तरवनस्पतिमिष्ट्वाऽश्विनौ वाश्वयुजौ यजेत् प्रकृत्यनुग्र आगन्तूनामन्ते निवेशवत्स्थालीपाकेन शेष उक्तः ॥

॥ "जयान्...। अपां वा समीपे वाशब्दश्चकारार्थे। अपां च समीप इत्यर्थः। एवं दिग्देशकालनियमाः। चतुर्षु कोणेषु। वनस्पतिशाखायामवसक्तानि चीराणि वस्त्रख(ष)ण्डानि पताकालक्षणानि यस्याः सा तथोक्ता। गन्धस्रग्दामवत्यां पुष्पमालावत्यामित्यर्थः। अगृहीतपुष्पप्रकरवत्यामित्यर्थः। चतुर्दिशं चतुर्दिक्षु। अपूपस्रस्तर०। तस्यां वेद्यां सर्वगन्ध० चोपकल्प्य कङ्कणं प्रतिसरदधि० इध्मार्थेऽश्वत्थ० समाधाय तत्र तिस्रः प्रधानदेवता उच्चैः श्रवसं वरुणं विष्णुमिति। तास्तिस्रो देवताः स्थालीपाकै र्यजेत पशुभिश्च स्थालीपाकधर्मस्तु प्रागुदश्चमिति सूत्रे आग्नेयस्थालीपाके विहितः। पवित्रे स्रुव० अवदानधर्मेण स्थालीपाकस्यावद्यति। उच्चैःश्रवसे स्वाहेति जुहोति। ततो द्वितीयस्थालीपाकस्यावद्यति। वरुणाय स्वाहेति जुहोति ततस्तृतीयस्थाली० विष्णवे स्वाहेति जुहोति। ततश्चतुर्गृहीतमाज्यं गृहीत्वा अश्विभ्यां स्वाहा ततः पुनरवद्यति। अश्वयुग्भ्यां स्वाहेति द्वितीयम्। ततोजयादिकर्मसमापनम्। इमे स्थालीपाकाः पशुतन्त्रपठिता न भवन्ति। तत्र वपाहोमादनन्तरं तद्देवत्यस्थालीपाकः स्यात्। ततः स्थालीपाकतन्त्रं समाप्य पशुयागः प्रारभ्यते। तद्विधानं पूर्वोक्तं तत्र उच्चैःश्रवसं वरुणं विष्णुमिति पशुभिर्यजेत। तत्र प्रतिदैवतः पशुः। एकमुच्चैःश्रवसे वरुणाय तृतीयं विष्णवे। वपानां युगपद्धोमः। मन्त्रैक्यात्। जातवेदो वपया गच्छ देवानिति। ततः पूर्ववत् पश्वङ्गहोमः। पूर्वमुच्चैःश्रवसे" ॥ ४ ॥

---

१-४ ० घ.। २ माने ० ख.। ३ रप्यत्र ग. च.। ५-६ अधिकं, घ,।

जयान् हुत्वा या ओषधयः समन्न्यायन्ति पुनन्तु मा पितरोऽग्नेर्मन्व इति चतुर्भिरनुवाकैरपोऽभिमन्त्र्याश्वान्स्नपयन्ति ॥ ५ ॥ गन्धस्रग्दामभिरलंकृत्य प्रदक्षिणं देवयजनं त्रिः परियन्ति ॥६॥ प्राहर्षं कारयन्ति ॥ ७ ॥ इष्टे यथास्थानं[2] व्रजन्ति ॥ ८ ॥ गौरनड्वाँश्च दक्षिणा ॥ ९ ॥ इति द्वितीयपुरुषे षष्ठः खण्डः ॥६॥

' या ओषधयः ' अपां समीप इत्युक्तं तासामभिमन्त्रणं स्नपनं[1] चाश्वानाम् । तानश्वान् गन्धस्रग्दामभिरलंकरणदेवयजनप्रदक्षिणं त्रिः परियन्ति । प्रहर्षं कारयति वडवादर्शनाभीष्टं यथार्थस्वस्थानं व्रजन्ति । अश्वा गौरनड्वांश्च दक्षिणा अश्वा मा ? वाता (तो)त्राधिकारो न परकीयं (:) स्नाप्यत इति ॥ ॥ " देवयजनशब्देन वेदिरुच्यते । प्रहर्षं का० प्रहर्षं हेषारवम् । इष्टैर्यथास्थानं व्रजन्ति । इष्टे (:) समाप्ते कर्मणि अश्वशालायां व्रजन्ति ध्रुवाश्च कल्पः समृद्ध्यर्थम् । " ॥ ५ ॥ ॥ ६ ॥ ॥ ७ ॥ ॥ ८ ॥ ॥ ९ ॥

इति पूरणव्याख्याने द्वितीयपुरुषे षष्ठः खण्डः ॥ ६ ॥



१ स्नाप, ग. च. । २ इष्टस्थानिं, ग. च. । ३ स्व, ग. च. । ४-९ ० घ. । ६ दी, घ. । ७-८ । अधिकं, घ. ।

## सप्तमः खण्डः

आग्रहायण्यां पौर्णमास्यां पयसि स्थालीपाकँ श्रपयित्वा तस्य जुहोति—

अपः श्वेतपदाग्रहि पूर्वेण चापरेण च ।
सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धव्यैः स्वाहा ॥
श्वेतो रुषत्यो विदधात्यश्वो दधद्गर्भँ वृषः सत्वर्या ज्योकुं ।
समं जनाश्चक्रमयो वसानाः प्रोषादसाविरसि विश्वमेतत् ॥
श्वेताय रौषिदश्वाय स्वाहा.
न वै श्वेतस्याभ्याचारे अहिर्जघान किंचन ।
श्वेताय वैतहव्याय स्वाहा. ॥
अभयं नः प्राजापत्येभ्यो भूयात् स्वाहा ॥ इति ॥ १ ॥

'आग्रहायण्यां पौर्णमास्याम्' आग्रहायणी मार्गशीर्षी तस्यां पयसि [3]स्थालीपाकं श्रपयित्वा तस्यै जुहोति । अपः श्वेतपदेत्याद्या आहुतीश्चतस्रः प्रधानस्थाने यद्यपि सर्पबलीनामुत्तरकालं सर्पयागा स्थालीपाकेनायं क्रियते तथापि विना तदङ्गप्रतिपादकस्य प्रकरणादेर्विनियोजकस्याभावात्तस्मान्नित्योयं सर्पयागो विनैव सर्पबलिभिर्भवत्येवं येषां तु सर्पबलयो नित्यास्तेषामप्यङ्गप्रधानत्वाभावान्निरूपणीयः स यदीष्यतेति चरमस्यैव प्राथम्यात्स्यात्सर्पबलीनामङ्गतास्तु बिभ्यदिति भयान्निमित्तत्वम् ॥ "आग्र० जुहोति तत्रादौ प्राणायामकरणं पात्राणामासादनं च । निर्वापः । देवस्य व० श्वेतपत् श्वेतरुषत् श्वेतवैहव्यप्रजापत्येभ्यो जु० स्थालीपाकाधिश्रयणं पूर्ववत् । स्थालीपाकस्यावद्यति । अथ श्वेतपदागहीत्यनेन प्रथमामाहुतिं जुहोति । अभयं नः स्वाहेति चतुर्थीम् । ततो जयादिकर्मसमापनम् । अध्वर्युब्रह्मणोर्दक्षिणादानम् । कर्मापवर्गे ब्राह्मणभोजनम् । तस्मिन्दिने रात्रौ मृदुतृणमये स्वस्तरे " ॥ १ ॥

१ वा, ग. च. । २ जोः, ग. च, । ३–४ ० घ. । ५–६ अधिकं घ. ।

स्रस्तरेऽहतꣳ वास उदग्दशमास्तीर्योदकाꣳस्येऽश्मानꣳ व्रीहीन् यवान्वास्य परिषिञ्चति स्योना पृथिवि भवेति द्वाभ्याꣳ सुत्रामाणमिति द्वाभ्याम् ॥ २ ॥ शमीशाखया च सपलाशयोदञ्च त्रिःसमुन्मार्ष्टि स्योना पृथिवि भवेति द्वाभ्याꣳ सूत्रामाणमिति द्वाभ्यां नमो अस्तु सर्वेभ्य इति तिसृभिश्च ॥ ३ ॥

शाम्यन्तु सर्पाः स्वशया भवन्तु ये अन्तरिक्ष उत ये दिवि श्रिताः।
इमां महीं प्रत्यवरोहेम ।
शिवामजस्राꣳ शिवाꣳ शान्ताꣳ सुहेमन्तामुत्तरामुत्तराꣳ समां क्रियासम् ॥

इति ज्येष्ठ प्रथमानुदीच आवेशयति ॥४॥ उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आज्योतिरेति । आरैकपन्थां यातवे सूर्या-

अस्यांगतप्रत्यवरोहणमाहे–[1] 'स्रस्तरे' मृदुतृणशयनार्थे अहतं वास उदग्दशमास्तीर्य उदकांस्ये उदकवति अमानमूलं व्रीहिः षष्टिकादिर्यवं धान्यविशेषः । तेषु प्रक्षिप्य परिषिञ्चति । उदकेन वा स्रस्तं स्योनापृथिवी भवेति मन्त्रद्वयेन सकृत्परिषिच्य पुनः सकृन्मन्त्रद्वयेन यद्वा चत्वारोऽभिषेकाः प्रति मन्त्रशमीशाखया पर्णसहितया त्रिरिति प्रतिवाक्यं मन्त्रगणे सकृत्सकृदेकैकेन गणेन विग्रहणं क्रियते [2]प्रतिमन्त्रमित्यस्यवक्षस्याविवृत्यर्थमितरथानुवादमात्रमनर्थकंस्यात्[3] । उदञ्चमुदङ्ङ तिष्टन्[4] संमार्गं करोति ॥ "[5]द्वाभ्यां सकृत् परिषिञ्चति। त्रिः समु० नमोऽस्तु सर्वेभ्य इति तिसृभिर्ऋग्भिस्तृतीय समुन्मार्जनं करोति। एवं सप्तभिर्मन्त्रैस्त्रिः समुन्मार्ष्टि[6] " ॥ २ ॥ ॥ ३ ॥

'शाम्यन्तु' सर्पा इति मन्त्रेण ज्येष्ठप्रथमानुदीच दक्षिणत आरभ्यते यो ज्येष्ठस्तं तं प्रथममावेशयेत् । शयनकाले च तत् प्रत्यवरोहणं स्यादावेशनस्य शयनार्थत्वात्। यस्तु स्रस्तरणे स्वपिति न चेत्कर्म यथा [7]प्रसवद्विधानम्। मप्रसवतोऽनुभवत्येवमेतत् । यो वा स्रस्तरेण मेष्यते [8]तस्य मङ्गलार्थत्वमप्ये-

१–१ ० घ. । २–३ ० घ. । ४ तिष्ठ । ख. ग. घ. च. । ५–६ अधिकं, घ. । ७ पुंस, ग. घ. च. । ८ तस्या, ग. घ. ।

**यागन्म यत्र प्रतरं न आयुः । इति कनिष्ठप्रथमानुज्जिहते ॥५॥ चैत्र्यामुद्रोहणम् ॥ ६ ॥ न तत्र स्थालीपाको न शाखया समुन्मार्ष्टि ॥ ७ ॥**

**अयं तल्पः प्रतरणो वसूनां[1] विश्वाविभ्य(?) तल्पो अस्मान् ।**
**ज्योग् जीवेम सर्ववीरा वयं तम ॥**

**इति तल्पमभिमन्त्रयते ॥ ८ ॥**

तत्कार्यम् तस्याद्दृष्टार्थत्वात्समिच्छेषोऽपि भवतु उदीर्घं जीव इति मन्त्रेण कनिष्ठप्रथमाः संजिहाते[2] योजः कनिष्टः स पूर्वमुत्तिष्ठतीत्यर्थः । आवेशनकालेनोत्थाप्यकालो व्याख्यातः ॥ ४ ॥ ॥ ५ ॥

'चैत्र्यामुद्रोहणम्' चैत्री प्रसिद्धा वा उद्रोहणं खट्वारोहणं शयनार्थम्[3] । न तत्र स्थालीपाकः । तत्रोद्रोहणे सर्पयागार्थः[4]। स्थालीपाको न कार्यः। न शाखया समुन्मार्ष्टि तल्पमिति शेषः । एवं च परिषिञ्चत्येवोदकस्य विधिना प्रतिषेधाभावात्। तथाहि दध्याज्ययोरग्निहोत्रे पर्यग्निकरणाभ्यनुज्ञानादि न दृश्यते प्राप्तिपूर्वकत्वान्निषेधस्य प्रतिषिद्धं स्यादेव । अयं तल्प प्रतरण इति खट्वाभिमन्त्रेण यस्यापि स्थण्डिलशायित्वात्खट्वायां सुषुप्सा नास्ति तस्यापि मङ्गलार्थं स्रस्तरवदवस्तीर्य । अन्यस्तु खट्वायामेते[5] तस्यैव युक्तं यतो व्रतवन्नियमार्थमिदमिति गम्यते । कश्चार्थे[6]—नियमार्थे[7] स्वयमत्र नियमार्थः[8] । सर्वदा खट्वायां शयना यस्य पुरुषार्थत्वान्मासचतुष्टयं स्रस्तरे भूमौ शयनमुच्यते स्रस्तर एव शयीत वा खट्वायां प्रत्यवरोहणं च खट्वायामेवं तच्च विधिपूर्वं भवतीति विधिरुक्तः[9-10]। एवं चैत्र्यामुद्रोहणमभिहितं यथा सर्वकाले भोजने नियमः—

"सायं प्रातर्मनुष्याणामशनं देवनिर्मितं ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः॥" इति (म. २–५३ त्र.)॥

॥ "[11]आग्रहायणीदिवसादारभ्य चैत्रीपर्यन्तं स्वस्तरे स्वपेत् । तल्पशब्देन खट्वोच्यते । एवं चतुरो मासान्स्वस्तरे शयनं कृत्वा चैत्र्यां खट्वायां शयनं करोति[12]" ॥ ६ ॥ ॥ ७ ॥ ॥ ८ ॥

१ विश्वाबिम्य, घ. । २ सहेति, ग. च. । ३ र्थः, च. । ४ ससर्प, घ. । ५ द्य, घ. । ६ मेवं, घ. । ७ अर्थे, ख. । ८ र्थः, घ. । ९–१० ० घ. । ११–१२ अधिकं, घ. ।

त्रीणि नाभ्यानि फाल्गुन्यामाषाढ्यां कार्त्तिक्याम् ॥ ९ ॥ तासु नाधीयीत ॥१०॥ तासु पयसि स्थालीपाकः स व्याख्यातः ॥ ११ ॥ ॥ इति द्वितीयपुरुषे सप्तमः खण्डः ॥ ७ ॥

'त्रीणि नाभ्यानि' कर्माणि भवन्ति इति तान्याह–'फाल्गुन्याम्' निगदव्याख्यातं तासु नाधीयीत। अङ्गार्थं पुनर्न निषेध इत्यष्टकासु वक्ष्यामः। अनादिष्ट दैवतत्वादाग्नेयः स्यात्। ननु नित्ये आग्नेये स्थालीपाकः फाल्गुन्यादिनिमित्तकः पयसीति गुणविधिः स्याद्धाग्निहोत्रमिवेन्द्रियकामस्य नैतदन्त्यस्वरूपत्वादनित्यमप्यस्ति। तत्र प्रसङ्गानित्यसिद्धिस्तथा च मित्रो[1] जनान्यातयतीत्यादौ पूर्वाहुत्या सरूपे न्यां दुग्धा (ग्ध्वा) पुनरग्निहोत्र मुक्तम्। तस्मात्तण्डुलैरग्निहोत्रे नास्ति प्रसङ्गानित्यसिद्धिः[2]। पय आदिना पुनरग्निहोत्रं होतव्यमितरथा[3] यथास्रजमविछिद्येतेति नित्यविच्छेदः स्यात् कथिता व्यञ्जनादिदोषा एव शो ? रित्यनुषज्जनेन यत्स्वरूपहानिः क्रियते अग्नयेऽनुब्रूहीति केवलस्याग्नेः प्रयोगात्। अनुषङ्गस्य च समुच्चयार्थत्वम्[4]॥ ॥ "अथ सूत्रक्रमात्रीणि नाभ्यानि कर्माणि भवन्ति। फाल्गु०। तासु तिथिषु नाधीयीत। आचारेणान्य इति सूत्रेण सर्वासु[5] पौर्णमासीषु अनध्याये न प्राप्ते पुनरनध्ययनग्रहणमृतुसन्धिष्वनध्यनप्राप्त्यर्थम्। तासु पयसि स्थालीपाकः। स त्वाग्नेयेन स्थालीपाकेन व्याख्यातः। अनादिष्टदेवतेष्वग्निमिति वचनात्। अग्निः सर्वा देवता इति श्रुतेः। तद्विधानं प्रागुदञ्चनमिति सूत्रे विहितम् इति नाभ्यकर्मक्रमः[6]"॥ ॥ ९ ॥ ॥ १० ॥ ॥ ११ ॥

॥ इति पूरणव्याख्याने द्वितीयपुरुषे सप्तमः खण्डः ॥ ७ ॥



१–२ ० घ. । ३–४ ० घ. । ५–६ अधिकं घ. ।

# अष्टमः खण्डः

तिस्रो ऽष्टकाः ॥ १ ॥ ऊर्ध्वमाग्रहायण्याः प्राक् फाल्गुन्यास्ता-मिश्राणामष्टम्यः[1] ॥ २ ॥ तासु नाधीयीत ॥ ३ ॥ तासु पयसि स्थालीपाकꣳ श्रपयित्वा तस्य जुहोति—

या देव्यष्टकेष्वपेसापस्तमास्तपा अवया असि[2] ।
त्वꣳ यज्ञे वरुणस्यावया असि तस्यै त एना हविषा विधेम ॥
उलूखला[3] ग्रावाणो घोषमकुर्वत हविः कृण्वन्तः परिवत्सरीयम्

---

'तिस्रोऽष्टकाः' त्रीणि नाम्यानीति त्रिसंख्यासाम्येनानन्तरमुच्यते तिस्रोऽष्टका इति अष्टकादिसमुदायस्यैकं कर्मत्वम् । चातुर्मास्यवत् तासां कालमाह—ऊर्ध्वमाग्रहायण्यास्तामिश्राणां कृष्णपक्षाणामित्यर्थस्तासु नाधी-यीत । सर्वास्वष्टकास्वनध्ययनसिद्धमाचारेणान्य इत्येवं तर्हि नियमार्थस्ततोऽ-न्यास्वष्टमीष्वधीयीतेव तदसत् । अनध्याय–प्रकरण एवैतद्वक्तव्यं नाष्टकाप्र-करणे ऽनुपयोगात् । तास्विति सामान्यलक्षणापि न भवति तिस्रोऽष्टकास्त्रि-रात्रमिति आचारेणैवसिद्धत्वात् । तस्मात् क्रत्वर्थमिदमध्ययनम् । प्रकरणा-द्यज्ञोपवीतीतिवत् । यथा यज्ञोपवीती दक्षिणाचार इति एवं च यद्यधीयीताष्ट-काकर्म विगुणं स्यात् तत्त्वाम्नातं प्रायश्चित्तं क्रत्वर्थं कुर्यादभोजनं द्वितीयं प्रायश्चित्तं स्नातकव्रतलोपात् ॥ "तासां मध्ये प्रथमा मार्गशीर्षकृष्णपक्षे । मध्यमा पौषकृष्णपक्षे । उत्तमा माघकृष्णपक्षे । तासामादौ श्राद्धं न कुर्यात् । यथाह कात्यायनः—नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते इति" ॥ १ ॥ २ ॥ ३ ॥

'तासुपयसि' इत्यादीति सिद्धं या देव्यष्टके उलूखला ग्राव(वा)णः याञ्जनाः (३) संवत्सरस्य चतस्रः स्थालीपाकान् । हेमन्तो वसन्तो० शान्ता पृथिवी, आपो मरीची, कविरग्निरिन्द्र (४), विश्वा आदित्या इति पञ्चाज्यस्यँ ॥

---

१ म्याम्, ग. च. । २ पयसा, ग. च. । ३ ल, ग. च. । ४–५ अधिकं, घ. ।
४ पयसा, ग. च. । ९ ल, ग. च. । ६–७ ० घ. ।

एकाष्टके सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥
यां जनाः प्रतिनन्दन्ति रात्रीं धेनुमिवायतीम् ।
सꣳवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥
सꣳवत्सरस्य प्रतिमाꣳ ये त्वा रात्रीमुपासते ।
तेषामायुष्मतीं प्रजाꣳरायस्पोषेण सꣳसृजस्व ॥

इति चतस्रः स्थालीपाकस्य ॥ ४ ॥ अष्टकायै सुराधसे स्वाहेति सर्वत्रानुषजति ॥ ५ ॥

हेमन्तो वसन्तो ग्रीष्म ऋतवः शिवा नः शिवानो वर्षा अभयाश्चिरं[1] नः
वैश्वानरोऽधिपतिः प्राणदो नो अहोरात्रे कृणुतां दीर्घमायुः ॥
शान्ता पृथिवी शिवमन्तरिक्षं द्यौ र्नो देव्यभयं कृणोतु ।
शिवा दिशः प्रदिश आदिशो न आपो विद्युतः परिपान्त्वायुः ॥
आपो मरीचीः परिपान्तु विश्वतो धाता समुद्रो अभयं कृणोतु ।
भूतं भविष्यदुत भद्रमस्तु मे ब्रह्माभिगूर्त्तꣳ स्वरक्षाणः[2] ॥
कविरग्निरिन्द्रः सोमः सूर्यो वायुरस्तु मे अग्निर्वैश्वानरो
अपहन्तु पापम् ।
बृहस्पतिः सविता शर्म यच्छतु श्रियꣳ विराजं मयि पूषा दधातु ॥
विश्वे[3] आदित्या वसवश्च सर्वे रुद्रा गोप्तारो मरुतश्च सन्तु ।
ऊर्जं[4] प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु ॥

इति पञ्चाज्यस्य ॥ ६ ॥

---

"तत्रादौ पात्राणामासादनं पवित्रे अवदानधर्मेण स्थालीपाकस्यावद्यति या देव्यष्टकेष्विति प्रथमामाहुतिं जुहोति । उलूखला ग्रावाण इति द्वितीयाम् । एवं स्थालीपाकं हुत्वा स्रुवेण पञ्चाज्याहुतीर्जुहोति हेमन्तो वसन्त इति प्रथमाम्[5]" ॥ ४ ॥ ५ ॥ ६ ॥

---

१ शरं, ग. च. । २ ररक्षा, ग. च. । ३ विश्वा, ग. च. । ४-५ अधिकं, घ. ।

**जयान्हुत्वेडामग्न इति स्विष्टकृदिति ॥ ७ ॥ एवꣳ सर्वासु ॥ ८ ॥ इति द्वितीयपुरुषेऽष्टमः खण्डः ॥ ८ ॥**

इडामग्न इत्युक्त्वा स्विष्टकृतहोमं जुहुयादित्यर्थः । अग्नये स्विष्टकृत इति मन्त्र एवोच्यते । अतिदेशसूत्रमनर्थकं कुतस्तासु पयसि स्थालीपाक इत्यादि धर्मस्तासु सर्वास्वेवोपदिष्टं तास्विति बहुवचनमेवं तर्हि गृह्यान्तरोक्ताष्टकासंग्रहार्थः । एवं सर्वास्विति तेन प्रोष्ठपदाष्टकास्वप्येवं स्यात् । उपसंहारार्थं वा धूमादेरिवात्र चोद्यमाग्रहायण्या ऊर्द्ध्वं तिस्रोऽष्टकाः प्रागेव फाल्गुन्या भवन्ति । अनर्थकं[2] फाल्गुनीग्रहणमधिकमासे कदाचित्फाल्गुनीद्वयं स्यात्तदा द्वितीया फाल्गुन्यवधित्वेन गृह्यते न[3] प्रथमेति ह्यष्टकाहोमं चतुरष्टकोवेति च गृह्यान्तरे येनोक्तमाग्रहायण्याः कथं प्राक् फाल्गुन्यास्तिस्र एवेत्याशङ्क्यर्योधिकमासेऽपि तिस्र एवेति नियमार्थमिति परिहृतं त[4]न्नामासु कुतस्तिसृग्रहणाद्यौचित्यानुवादत्वात् । यास्तिस्रोऽष्टका इत्यनूद्य ता एकं कर्मेति तात्पर्यविधानात्[5] । न चाग्रहायणीद्वयं कदाचिदपि संभवति पुं[6]नरुक्तत्वादेर्ग्रहण(राग्रहायण)-मासस्य सौर चान्द्रसममनयोर्भेदेन तु सर्वदैवाग्रहायणद्वयं कदाचिदेकं स्याद्यदा मासद्वयसन्निपातः स्यात्[8] ॥ "त[9]तो जयहोमः विधिना स्विष्टकृते समवद्यति । इडामग्न इति मन्त्रेण स्विष्टकृद्धोमः । एवं सर्वासु पूर्वं तिस्रोऽष्टका ? ग्रहणम् । एवं सर्वास्विति पुनर्वचनं भाद्रपदग्रहणार्थम् । उत्तमायां विशेषः । तदपरस्मिन् खण्डे वक्ष्यति[10]" ॥ ७ ॥ ८ ॥

॥ इति पूरणव्याख्याने द्वितीयपुरुषेऽष्टमः खण्डः ॥



१-२ ० घ. च. । ३-४ ० घ. । ५-६ ० घ. । ७-८ ० घ. । ९-१० अधिकं, घ. ।

## नवमः खण्डः

उत्तमायाः प्रदोषे चतुष्पथे[1]ऽङ्गशो गां कारयेत् ॥ १ ॥ यो य आगच्छेत्तस्मै तस्मै द[2]द्यात् ॥ २ ॥ श्वो ऽन्यां कारयेत् ॥ ३ ॥ तस्या वपां जुहुयात्–

वह वपां जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके
मेदसो घृतस्य कुल्या अभिनिःस्रवन्तु सत्याः सन्तु
यजमानस्य कामाः स्वाहा ।

इति ॥ ४ ॥ अथास्या वक्षस उद्गोदन[4]श्रपयति ॥ ५ ॥ तस्याष्टकाहोमकल्पेन शेषो व्याख्यातः ॥ ६ ॥

---

उत्तमायाः–इदानीमष्टकावन्नित्यं पितृयज्ञमाह 'उत्तमाया' इत्यादि उत्तमायाः फाल्गुन्याः प्राग्याष्टका तस्या यः प्रदोषस्तस्मिन्प्रदोषे गां कारयेत् । शमितारं प्रेष्यत्यङ्गशो गां कुरुतेति यो य आगच्छेत्कार्यवशाच्चतुः पथे तस्मै तस्मै दद्यात्पितरोऽत्र कर्मणि देवता स्त्री गौः कुतः श्वो ऽन्यां द्वितीयामिति प्रतीतेः । अनुवाक्याद्यन्ते चास्याः प्रयोगादोदनस्याप्यन्तर एव श्रपणं नैवमोदनशब्देन शा[6]मित्यस्माभिः कल्प्यते नाभिधानवृत्त्या प्रतीयते शालाग्नि रपि आदिग्देशसंप्रत्ययात् तस्मादोदनं स्थालीपाकत्वात्–शालाग्नौ श्रपयेदिति लक्ष्यते तस्याष्टकाहोमेन शेषो व्याख्यातस्तस्यवक्षस ओदनस्य चाष्टका होमेनाष्टकाहोमविधिना शेष उक्ताद्योन्यः सोऽत्र शेष उच्यते तस्योदनादेः स तस्य मानो य उत्तरो विधिरिति । इमं स्तोममर्हत इत्यादि (:) सोऽष्टकाहोमवदित्यर्थः । ननु वपाहोमस्याशेषश्रुतत्वाद्यभावात् । वपा भेदस्य न शेष उक्तादेव हेतोरोदनः प्रधानः प्रधानं द्वितीयं ता एव कर्त्तव्या गोर्वा प्रतिनिधिः कार्यः स चागमसादृश्यात्पश्वङ्गं पायसं वा स्यात् प्रतिनिधिनापि नित्यं कार्यं मन्त्राणांसमानत्वात् । मांसादोदनाच्चावदाय चतस्र आहुतीः सह जुहुयात् या देव्यष्टका इत्यादि पञ्चोत्तरा आज्यस्येडामग्न इति स्विष्टकृत् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

---

१ पथं गत्वाङ्गशो, ग. च. । २ प्रदद्यात्, ग. च. । ३ न्यां, ग. च. । ४–५ ० घ. । ६–७ ० घ.

**अवशिष्टं भक्तꣳ रन्धयति ॥ ७ ॥ श्वोऽवशिष्टं भक्तं रन्धयित्वा पिण्डानामावृता त्रीन्माꣳसौदनपिण्डान्निदधाति ॥८॥**

" इदानीमुत्तमाया विशेषा लिख्यन्ते उत्तमाया माघकृष्णाष्टम्याः । तस्यां यः प्रदोषस्तस्मिन्प्रदोषे चतुष्पथे गत्वा गां कारयेत् । कार्यवशाद्यो य आगच्छति पश्वङ्गानि तस्मै तस्मै दद्यात् । का ( क ) लौ गौः ( ? ) पशोर्निषेधत्वात् । गृहे पायसं पाकं श्रपयित्वा यो य आगच्छेत्तस्मै तस्मै दद्यात् पितॄन्प्रीणात्विति अपसव्येन दद्यात् । पश्वभावेऽपि पायसमिति वचनात् । श्वोऽन्यां कारयेत् । श्वो नवम्यामित्यर्थः प्रभाते सति अन्यां गां कारयेत् । पितरोऽत्र द्वितीयां नवम्यां दिवसे तस्याप्यभावे पायसमित्यर्थः । तत्रादौ पात्राणामासादनम् । पवित्रे ततः स्थालीपाकतण्डुलांस्त्रेधा विभज्य एकेन भागेन मांसस्थालीपाककरणम् । भागद्वयमवशेषणीयं ब्राह्मणभोजनार्थं पिण्डार्थं च विधिना स्थालीपाकाधिश्रयणं पूर्ववत् ततो वापहोमः । अथ स्थालीपाकस्यावद्यति तस्याष्टकाहोमकल्पेन शेषो व्याख्यातः । मेक्षणं दर्भांश्चाधायेत्यादि कर्मसमापनम् । अध्वर्युब्रह्मणोर्दक्षिणादानम् ॥ ६ ॥

'अवशिष्टं भक्तं रन्धयति' बहून् पाकान् वपावत्तसोरुपयुक्तयो[1]र्यदन्यत्तदवशिष्टं तस्यार्द्धं भक्तं च रन्धयति । कथं पुनरर्द्धं लभ्यते यावताव[2]शिष्टमित्युक्तं नैष दोषः श्वो विशिष्टमिति पुनरवशिष्टवचनादर्द्धमिति गम्यते भक्तं मांसोदनं बहूननेकविधान्पाकविशेषान् रन्धयति साधयति किमर्थं रन्धयति इति चेदुक्तं ब्राह्मण एव हविःशेषं भुञ्जीत ब्राह्मणभोजनार्थं रन्धनमिति श्वोऽवशिष्टं रन्धयित्वा श्वो दशम्यामवशिष्टं ब्राह्मणभोजनाद्यदवशिष्टमर्द्धां त्तदभक्तमोदनमित्यर्थाद्रन्धयित्वा साधयित्वा किं कुर्यादित्याह पिण्डानां[3]मावृत(तां)स्त्रीन् मांसोदनपि[4]ण्डान्निदधाति पिण्डानामावृता पिण्डपितृयज्ञपिण्डानां[5]मावृदितिकर्त्तव्यता[6] तया आवृता त्रीन् मांसोदनपिण्डान्निदधाति मांसस्यौदनं मांसौदनमथवा मासं च तदेव तच्चासाविति मांसौदनं तस्य त्रीन्पिण्डान्निदधाति त्रिग्रहणात्सर्वमेव मांसौदं[7]नश्चा ( श्च ) तेषु पिण्डेषु प्रतिपादयेत् तेन पितृयज्ञहोमो न भवति तेनापि ब्राह्मणभोजनमवशेषयेत् ।

१–२ अधिकम्, घ. । ३–४ ० घ. । ५ मानीया आ, ग. च. । ६ ता ( पिण्डपितृयज्ञवत्सर्वं समाप्य ) घ. । ७ नं, घ. ।

## श्राद्धमपरपक्षे पितृभ्यो दद्यात् ॥ ९ ॥

अन्येतु अवशिष्टभक्तं रन्धयित्वा बहूनन्नविकारान् अपयति पिण्डानामित्यादि तेषां पाठे नवम्यामेव सर्वमेव च मांसं त्रिषु प्रतिपाद्य अत्र रन्धयित्वेति सिद्धं अपयतीति बहु एकार्थमनुदितं न पुनरुक्तदोषः ॥ ७ ॥ ८ ॥

( बहून्पाकविशेषान् रन्धयित्वा अवशिष्टं भक्तं रन्धयति । भक्त- )
( शब्देन मांसमुच्यते । भागद्वयावशिष्टतण्डुलानां मध्ये एकं भागं रन्धय- )
( तीत्यर्थः । तेन पाकेन मांसावशिष्टेन च ब्राह्मणान् भोजयेत् । अपसव्यं )
( कृत्वा एभिर्ब्राह्मणभोजनैः पितॄन्प्रीणाति । एतत्सर्वं नवम्यां कुर्यात् । )
( श्वो दशम्यामवशिष्टभक्तं रन्धयति तृतीयभागतण्डुलानित्यर्थः । तेन )
( त्रीन्मांसोदनपिण्डान्निदधाति तद्विधानमाह कर्षूकरणं यथाविधि स्तरणम् )
( एत पितरो० )

इदानीं पिण्डानामावृतेति प्रसङ्गात्स्वप्रधानं नित्याधिकाराच्च नित्यं श्राद्धमाह—'**श्राद्धमपरपक्षे पितृभ्यो दद्यात्**' तत् सत्यं विधीयते यस्यां बुद्धौ सा श्रद्धा उपवासादिभिरनुष्ठिता श्रौतस्मार्त्तादिषु कर्मसु आदरेण प्रवृत्तिर्या तया श्रद्धावान् उच्यते पुमान् श्रद्धया यन्निर्वर्त्यते तत् श्राद्धं रूढ्यापि पित्र्यं कर्मोच्यते तस्य कर्मणः साधनं यत्पायसादि द्रव्यं तदिह श्राद्धमित्युच्यते तदपरपक्षे पितृभ्यो दद्यात् । श्राद्धग्रहणं संज्ञार्थं तेनापरपक्षादन्यत्रापि स्मृतिवचनादयनमृताहतीर्थादौ अनेन विधिना श्राद्धं स्यात् । अपरपक्षग्रहणममावास्यायामन्यत्रेति गम्यते । सप्तमीनिर्देशादेकस्मिन्नहनि श्राद्धं कृत्वा कृती भवति न प्रत्यहं न हि कालावृत्तौ कर्मावृत्तिः । अत्यन्तसंयोगे तिथिनिर्देशादन्यत्रापि । पितृभ्य इति पितामहप्रपितामहशब्दौ लुप्तौ बहुवचनात् (द) सरूपैकशेषत्वं गमकत्वात् । मातृपितामही प्रपितामहीशब्दा ( नुप्राप्स्यै ) लुप्ता द्रष्टव्याः पुमान् स्त्रियेतिवचनादन्वष्टकासु हि स्त्रीभ्योऽपि श्राद्धदानं स्मर्यते हारीतेर्न तु मातुः पिण्डदानं पितृपिण्डदानादनन्तरमुक्तम्—

'**श्राद्धादीनां तथा पिण्डी पिण्डान्दद्यात्सुयन्त्रितान् ।**
**उदकाञ्जलिं दीपं च भोजनाभ्यञ्जने तथेति ॥**'

१–२ ० घ । ३–४ एतन्मध्यस्य स्थाने घ पुस्तके यदस्तितदर्धचन्द्रद्वयमध्येऽग्रे निवेशितं द्रष्टव्यम् । ५–६ ० घ. । ७ इदं पदं ० घ. । ८–९ ० घ. ।

**अनुगुप्तमन्नं ब्राह्मणान् भोजयेन् नावेदविद्भुञ्जीतेति श्रुतिः ॥१०॥**

मातापित्रोरुपकाराय आद्यमेकादशेहनि श्राद्धं स्मृतं तीर्थादिष्वपि ताभ्यां पुत्रः प्रीत्यर्थमाचरेत् ॥

**पितॄणां पिण्डयज्ञस्तु स्त्रीणां नैव निरूप्यते।**

पितुर्नाम्नासावित्येकवचनेन उत्पत्तिविनियोगाभ्यां पितृभ्य इति संप्रदानश्रुतेः मनुहारीताद्युक्तविधानाद् ब्राह्मणेषु पितृवदस्या(म्) प्रपूजयेत् । अपरपक्षशब्देनामावास्या गृह्यते ( माघान्तामावास्यां ) ॥ ९ ॥

'**अनुगुप्तमन्नं ब्राह्मणान् भोजयेत्**'। अनुगुप्तमननुभूतमन्नं शूद्रपतितरजस्वलासारमेयादिभिर्न स्पृष्टमनालोकितमन्न(म्) शाल्योदनपायसादि ब्राह्मणांस्त्रिप्रभृति असंभवेऽप्यसम्पत्तौ वा भोजयेदनुगुप्तादेवान्नात् पिण्डं दद्यात्। हुत्वोच्छिष्टं ब्राह्मणेभ्यः प्रदाय पिण्डेभ्योवशेषयेदिति भोजयितुं नियोगो हारीतवचनात् । नावेदविदो भोजयेदिति श्रुतिः । अवेदवित् श्राद्धमेव न प्रतिपद्येतेत्यर्थः । अथवा नावेदविदो भोजयेदिति भोजयितुं नियोगाधिकारित्वात् सर्वदा नाधियज्ञाधिदेवताध्यात्मरूपं यो वेत्ति। अथ वा सर्वदैकवेदवित्। विधिवाक्यानां चोत्पत्तिविनियोगप्रयुक्तमधिकारहेतुमनुद्य विधेयविवेके विवेकमङ्गप्रधानविशेषं च प्रकृतिविकृतिभावं ··· रूह्यापोह्यवाधीत्यभ्युच्चययोश्च परिसंख्यानियमौ वचनुवातौ (?) अपूर्वार्थवादत्वेन प्रसङ्गावृत्ती चानेकविधगोदानलक्षणयोर्वृत्तं त्रिविधवस्तुनोश्च यो वेत्ति स वेदवित् तं वेदाध्ययनशीलं भोजयेत्। नावेदविदुपवेशकादि पक्ति(ङ्क्ति) दूषकं न भोजयेत् । श्रुतिग्रहणं प्रतिषेधातिशयार्थं व्यतिक्रमेण भोक्तुः सकाशाद् भोजयितुः प्रभूततरं प्रायश्चित्तं यथा स्यात् । पञ्चम्यादिषु पुत्रकामादेर्गुणका(म्य)करो वेत्तव्यः। ततश्च कामान्तयोगे श्राद्धं न तस्मिन्नेवापरपक्षे षष्ठ्यादितिथिषु पुनः पुनः श्राद्धदानं किं तर्ह्यन्यस्मिन्नेवापरपक्षे संसन्ध्यामन्यस्मिन्नन्यस्मिन् सप्तम्यामित्येवं जाति गुणान्तरानुरोधेन प्रधानमावर्त्तनीयमेवं कृत्तिकादौ च न सर्वनक्षत्राण्येकस्मिन्नपरपक्षे संभवन्ति। तत्र अनुगुप्तमन्नं पवित्रमन्नं नावेदविद् भुञ्जीत। अवेदविदुषे श्राद्धं न कुर्यात् श्रुतिग्रहणं निश्चयार्थमेवं ॥ १० ॥

---

१-२ ० घ. । ३-४ ० घ. । ५-६ ० ग. । ७ दि, ग. । ८-१० ० घ. । ९ विवेके ० ग. । ११-१५ ० घ. । १२ दिदि, ग. । १३ का, ग. । १४-० च. । १६-१७ ० ग. च. ।

**यदि गवा पशुना वा कुर्वीत प्रोक्षणमुपपायनं पर्यग्निकरणमुल्मुकहरणं वपाहोममिति ॥११॥ त्रैधं वपां जुहुयात् स्थालीपाकमवदानानि च ॥१२॥ सोमाय पितृमते स्वधा नम इति जुहोति**

[1]अथवाऽपरपक्षस्य पञ्चमीप्रभृतिषु काम्यं श्राद्धं काम्यत्वं नित्यत्वं च संयोगपृथक्त्वादेकस्य न भवति अग्निहोत्रादि[2]वदतो नैमित्तिकं गुणमाह– '**यदि गवा पशुना वा कुर्वीत**' श्राद्धमपरपक्ष इत्यनुवर्त्तते कुर्वीतेत्यनुवादः ददातीत्यनुवर्त्तते करोतेरिव विशेषो ददाति । किं करोति देवदत्त इति करोतिविशेषविविदिषया [3]प्रश्ने वरं ददातीति प्रतिवचने दानविशिष्टं करोति [4]ब्रूते । प्रोक्षणे चोपपायनं, पर्यग्निकरणं वपाहोम इति परिसंख्या । अपूर्वविधित्वं तु युक्तम् । इतरथा यूपोऽपि स्यादा[5]घारादि यश्च समानजातीयं, तत् परिसंख्याया उपाकरणादेः पाशुकस्य निवृत्तिः स्यान्न स्थालीपाकसंबन्धस्याघारादेः । इच्छन्ति तस्यापि नि[6]वृत्तिं तस्मात्प्रोक्षणाद्यपूर्वविधिः । त्रैधं वपां जुहोति त्रीनवयवान् कृत्वा एकैकमवयवं सोमाय पितृमते इत्येकैकेन मन्त्रेण जुहोति स्रुवेण दर्वीहोमत्वात् । गृह्यकर्मत्वात् स्थालीपाकमपि त्वेवं कृत्वा जुहोति वपावत् कृत्स्ने द्वितीयानिर्देशात्–[7]वैधसंबन्धाच्च अवदानानां पञ्चविंशतिं हृदयादीनामङ्गानां तेषामेकादश हुत्वा पुनरेकादशोत्तराणि जुहोति त्र्यङ्गावदानैः संयुक्तमिति । एवं मासि मासि नियतं तन्त्रम् । एवं शब्दो यदि गवा पशुना वेत्यादिविधानं परामृशति । मासि मासीत्यनुवादोऽपरपक्ष इत्यनेन गतत्वात् । यद्वा प्रोष्ठपद्या ऊर्ध्वमेव लोक प्रसिद्धापरपक्षे तदित्याशङ्का मासिमासीत्युक्तं नियतमावश्यकम् । कथम् पुनरयं गोपशुः छागपशुर्वा कर्त्तव्य इत्याह तन्त्रं पिण्डपितृयज्ञे तन्त्रं कल्पोक्तविधानमिति यावत् । पिण्डपितृयज्ञे व्याख्यातमिति विशेषः । अन्ये तु पितृयज्ञश[8]ब्देनैवात्र पशुपितृयज्ञमाहुः [9]तैरत्र पितृयज्ञतन्त्रमसूचितं लिखितम् । अन्ये तु पितृशब्दं न पठन्ति । अत्र प्राचीनावीत्युत्तरतः पश्चात्संस्तीर्य पात्राणीत्यारभ्य केष्वासुद्धवानास्तृणातीति ( ? ) त्यार्तपशुशाखा प्रकल्प्य प्रोक्षणादिवपाश्र[10]-

१–२ ० घ. । ३ प्राश्न, ग. च. । ४ भूते, ग. घ. च. । ५–६ ० घ. । ७ बन्ध, ग. । ८ शब्दोनात्रमे ( त्रैवं ) पशु, ग. च. । ९–१० ० घ. ।

**यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयाम् । अग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम् ॥ १३ ॥ एवं मासि मासि नियतं तन्त्रं पिण्डपितृयज्ञे ॥ १४ ॥ इति द्वितीये नवमः खण्डः ॥ ९ ॥**

---

पैणान्ते सव्यं श्रुचमुदकुम्भमन्वाहरन्ते पशु(म्)वो(प)कल्प्य प्रोक्षणादि वपाश्रपणान्ते सव्यमावपनमुदककुम्भमन्वाहरत्युपवहते । एत पितरो मनोजवा इत्यादि मूलदेशे निनयनान्ते वपाहोमः स उक्तः । स्थालीपाकशब्दात्सिद्धैस्तण्डुलैः । अपि त्वोद्वास्य सव्यमन्वाहृत्यानयनं स्थालीपाकं च उक्तश्चैव होमः । अङ्गानि विविधानि कृत्वा सव्यमिति यङ्गान्यपूपाङ्गं वाभ्यञ्जन ऊर्णास्तुकं चात्रैवमुक्तशेषः । यूपोपसिक्तमाहुतित्रयं जुहोति अवदानशेषस्य श्रि(शृ)तमांसस्य रन्धयित्वातिथ्यादिभोजनं प्रतिपत्तिः कार्याभिधायि[2] यदिवेति गुणान्तरेण पूर्वोक्तगुणस्य विकल्पः प्रतीयते यदि वा मध्यकारणाद्योनिर्धनः प्रतिभाति यतो यदि गवा पशुना वा कुर्वीतेति यदि शब्दः पशुबन्धात् कदाचित्कृतं च । एवं मासि मासि नियतमिति नित्यत्वं च एकस्मिन् पशुपितृयज्ञे विरुद्धधर्मद्वयं मास एवाशे(?)यितुं शक्यमिति तर्ह्येवं मासि मासि नियतमित्यनुसूत्रम् । अथ समाधीयते चेत्तदा भेदमाश्रितमनुगुप्तान्नश्राद्धादिदमन्यत् श्राद्धान्तरं यदि गवा पशुना वेत्यादि एवं यदिशब्दोऽत्र वाक्योपादाने योऽग्निष्टोमं जुहोति यकुच्यः परिधिमनक्तीतिवत् शाखान्तरं सिद्धं यदिशब्देनानुवदति यद्युत्सृजेत् । माता रुद्राणामित्यत्राप्येवं स्यात् यदा प्रवृत्तो विकल्पो न(?)नोपक्रम्य विरमेदिति नियतं वचनम्[3] ॥ "[4] एवं मासि मासि अमावास्यायाममावास्यायां नियतं कुर्यात् । मानवसूत्रे ( १-१-२ ) तन्त्रपिण्डपितृयज्ञे । इति अमावास्याश्राद्धपदार्थानुक्रमः । माघकृष्णदशम्यां पिण्डपितृयज्ञवत् । पिण्डपितृयज्ञ(ज्ञे)अन्वाहार्यम्" ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

॥ इति पूरणव्याख्याने द्वितीये नवमः खण्डः ॥ ९ ॥



---

१—३—० घ. । २ यी, ग. । ४—९ अधिकं घ. ।

*

## दशमः खण्डः



### फाल्गुन्यां पौर्णमास्यां पुरस्ताद्धानापूपाभ्यां भगं चार्यमणं

नित्यानेव प्रकृत्याह—फाल्गुन्यां पुरस्तादेकाहे द्व्यहे वा अग्न्याधेयवत्। येद्वा पूर्वान्ह इत्यर्थः। पूर्वशब्दस्य सप्तम्यामस्तातौ प्रत्यये पुरादेशः। कालार्थेनोपक्रम्य धानानां समूहो धानं चाऽपूपश्च धानापूपौ। एकवचनान्तोऽथ धानाशब्दः समासेऽतो धानापूपाभिर्बहुवचनं चोद्यं बहुवचनेऽपि अथ(र्थे)त एकं बहुत्वमथाशङ्क्यते अपूपान् लोकवत्स्रपयेत्। अपूपत्वाद्धविर्होमानां यवानवहत्य प्रभृज्य लोकवदेव आयोजनं प्रथमसीरिकसंवदनं पर्यायिनं स्वे क्षेत्रे प्रथमं परिगमनं प्रवयनं बीजवपनं प्रथमं प्रवलनं प्रथमं धानानां लवनं प्रथमं प्लवनमिति केचित्पठन्ति। तत्र क्वचिद्देशान्तरे हेमन्तकाले पानीयेन क्षेत्रभूमिः प्लाव्यते। सीतायज्ञः। तप्तामनडुद्यः। वेहवतेतीत्यर्थ इति प्रथममनुगच्छति मातृभिः सहेतितन्तीत्युच्यते इत्यन्ये। अनडुह्(द्)यज्ञः। अनडुहा पुण्येहवस्त्विवति ब्राह्मणं भोजयेदिति स्मृतिः स इहानडुद्यज्ञ इह स्यात्। कृषिवृत्तिजीवनैरेतेषु निमित्तेषु एता देवता अवश्यं यष्टव्या नित्याधिकारात् कृषिष्विति मन्यन्ते गृह्योक्तं सुमयानां यातुं लाङ्गलं पवीरिचमिति मन्त्रवर्णाच्च स्वाध्यायाविरोधिनी कृषी चेत् दिष्टैवा भूमिं भूमिशयांश्चैव हन्ति काष्टमयोमुखमिति यथोक्तकारिणं प्रतिवचनम्। ननु यत्खट्वाकीटसहस्राण्यपि घ्नन्ब्राह्मणो प्रतिग्रहादौ परिवदनं दोषं न पश्यति तं प्रति सांवत्सरेषु च पर्वसु एता एव देवता यजति संवत्सरस्येमानि सांवत्सराणि पर्वाणि पक्षमास समन्वयः। बहुवचनममृतसत्वमसि मनुतेति सायं प्रातस्तथा दर्शपौर्णमासयोश्चेति स्यात्। न घुवरुणमाज्यमानादेशाद्धविषः सहाग्निं यथातीर्थयात्रां व्रजेदन्यार्थे प्र[व]सेत्स गङ्गादिनदीमासाद्य समुद्रं वा तडाकं वा देवखातं वा तदा प्रधानस्थाने वरुणाय स्वाहेति यजेत्। अन्यस्त्वाह—यो नदीतीरे वसति तडागनद्योः समीपे स तयोः प्रथमपूरे वरुणं यजेत्। उदधिशब्देन कूप उच्यते

१ मर्य, ग. च.। २ तद्दिने वा, घ.। ३–९ ० घ.। ४ वस्त्वनी, ग.।

**च यजेत् ॥ ९ ॥ इन्द्राण्यां हविष्यान् पिष्ट्वा पिष्टानि समुत्पूय यावन्ति पशुजातानि तावतो मिथुनान् प्रतिरूपान् श्रपयित्वा**

तस्य प्रधानसाधने वरुणं यजेदिति अत्यल्पमिदमुच्यते उदधि कूप इति वापीपुष्करिण्योरपि प्रथमसाधने स्यात् । भवति यजतीति शेषः । ओषधिषु पक्कासु वा क्षेत्रे प्रथमसमागमे च वनस्पतिषु अश्वत्थादिषु तथा प्रधानस्थाने आज्येन सोमाय स्वाहेति यजेत् । अन्यस्तु नीवाराद्योषधिषु प्रथमभक्षणे शम्यादिवनस्पतिफलप्रथमभक्षणे सोमं यजेतेति व्याख्यातवान् । अनादिष्टदेवतादेशो नास्ति यथा त्रीणि नाभ्यानि उपनयनादीनि च तेष्वग्निं यजति अग्निः सर्वा देवता इति श्रुतेः । कथं वा कस्मान्नभवति अनादिष्टदेवतेषु सिद्धायतनपर्वतादिष्विति नद्यादिप्रकारसाहचर्यात् स्यादेवं यदि नद्यादिषु देवताकाङ्क्ष(ङ्क्षा)न स्यात् । अस्ति च सा तस्मात्तद्विषयं स्यात् । अन्यस्ता-(स्तु) नद्यादिषु प्रथमं क्रियमाणेषु धर्मार्थमर्थवादेषु तेषामदृष्टसंस्कारार्थं वरुणाय यागः कर्त्तव्यः । यथा दृष्टार्थं भिद्यादिति ब्रूते तेषामोषध्यादिषु प्रथमप्ररोपितासु धर्माद्यर्थं वनस्पतये यागः तथा च पुराणादौ 'पञ्चाम्रवापी नरकं न पश्यति' इत्याग्नेयसूत्रविषयः ॥ द्वितीये नवमः ॥ "धानापू०.... यजेत् । पवित्रे श्रुव । अथ धाना लौकिकवद् भृञ्जेत् । अपूपान् लोकवद् भृञ्जेदेव-( अपूपत्वाद्धविर्होमानां यवानवहत्य प्रभृज्य लोकवदेव ) विधिना-निर्वापः । ततो धानाभर्जनम् । ततः पात्रत्रये धानात्रिधाविभागकरणम् । अपरस्मिन् पात्रत्रयेऽपूपस्यापि त्रिभागकरणम् । श्रुच्युपस्तीर्य धानानामवद्यति । भगाय स्वाहा इति होमः । एवमर्यम्णे एवमपूपस्यापि । ततो जयहोमः ।···। ततः कर्मसमापनम् । इति भगार्यम्णोर्यागपदार्थानुक्रमः ॥ १ ॥

भगार्यम्णोर्यागादनन्तरम् इन्द्राण्यान् हविष्यान् पिष्ट्वा पिष्टानि समुत्पूय ततः पवित्रादिकानामासादनं कांस्यपात्रं च यजमानस्य गृहे यावन्ति पशु-जातानि उत्पूतेन पिष्टेन तावतो मिथुनानप्रतिरूपान् कृत्वा श्रपयति । शृत-मभिघार्य तदनन्तरं रात्राविन्द्राण्यां चरुः कर्त्तव्यः । तेन हविर्मध्ये पिष्टमयानि

१ ण्या॰ह, ग. । ण्यानह, च. । २-४ ॰ घ. । ३ नव, च. । ५-६ अधिकं, घ. । ७-८-० ग. च, ।

**कांऽस्येऽध्याज्यान्कृत्वा तेनैव रुद्राय स्वाहेति जुहोति । ईशानायेत्येके ॥ २ ॥ सायमपूपाभ्यां प्रचरत्यग्नीन्द्राभ्याम् ॥ ३ ॥ आग्नेयस्तुन्दिलो न तस्य स्त्रियः प्राश्नन्ति सर्वामात्या इतरस्य ॥ ४ ॥ स्थालीपाकेनेन्द्राणीं श्वो वा ॥ ५ ॥ संघेष्वेकवद्बर्हिरग्निराघाराज्यभागाज्याहुतयः स्विष्टकृच्च ॥ ६ ॥ अग्निरिन्द्रः सोमः सीता सवितासरस्वत्यश्विनानुमती रेवती राका पूषा**

---

मिथुनमिथुनरूपाणि कर्तव्यानि ततः कांस्यपात्रे आधाज्यन ( ? ) कृत्वो परिबद्धाज्यं कृत्वा तेनैव कांस्यपात्रेण रुद्राय स्वाहेति जुहोति ( आज्यप्लुतं कृत्वा कांस्यपात्रेणैव रुद्राय ) मैत्रायणीयाचार्यादन्ये ईशानाय स्वाहेति हूयन्ते ततो जयहोमादिकर्मसमापनम् ॥ २ ॥

ततस्तस्मिन्नेव पौर्णमासीदिने सायंकाले अग्नीन्द्राभ्यामपूपाभ्यां प्रचरति । आग्नेयस्तुन्दिलः—मध्याधिकः । पवित्रादिकानामासादनम् । तत ? अपूपद्वयकरणं पूर्वमग्नये द्वितीयमिन्द्राय । एतयोर्यथाविधि अधिश्रयणमाग्नेयस्यापूपस्य स्त्रियो न प्राश्नन्ति । इतरस्य ऐन्द्रस्यापूपस्य सर्वामात्याः प्राश्नन्ति ततो दक्षिणादानं कर्मसमापनम् ॥ ३ ॥ ४ ॥

तस्मिन्नेव फाल्गुनीदिने स्थालीपाकेन इन्द्राणीकर्म करोति श्वो वा । ततः पवित्रादिकानामासादनम् इति फाल्गुनीपदार्थानुक्रमः ॥ ५ ॥

यदि कथंचिदनेकप्रधानानि कर्माणि सन्ति विवाहादीनि यदा तन्त्रेण क्रियन्ते तस्मिन्कर्मसंघेऽन्यस्मिन्कर्मसमूहे च एकवद्बर्हिः तथैवाग्निराघाराज्यभागाज्याहुतयः स्विष्टकृच्च । एतत्सूत्रं सर्वत्र व्यापकम् ॥ ६ ॥

अथ हलाभियोगानां पदार्थानुक्रमाः कथ्यन्ते । तेषु हलाभियोगेषु पूर्वं पूर्वेद्युः श्राद्धकरणम् । विधिना मातृपूजनमाभ्युदयिकश्राद्धं च । हलाभियोगानां कर्मणां प्रारम्भनिमित्तं श्राद्धं पार्वणत्रयमित्यादिप्रयोगेण श्राद्धं कुर्यात् । तत्र हलाभियोगदेवतानुक्रमः । अग्निः । इन्द्रः । एते द्वादश हला-

---

१–० च. । २–३–० ग. च. । ४–५–० ग. च. । ६–७–० ग. च. ।

**रुद्र इत्येतैरायोजन-पर्ययन-प्रवपन-प्रलवन-सीतायज्ञ-खलयज्ञतन्तीयज्ञानडुद्यज्ञेष्वेता देवता इति यजति साꣳवत्सरेषु च पर्वसु ॥ ७ ॥ नद्युदधिकूपतडागेषु वरुणꣳयजत्योषधिवन-**

भियोगदेवताः । अथ हलाभियोगकर्मनामधेयानि । अथानुक्रमः । आयोजनं कर्षणसामग्रीकरणम् । पर्ययनं प्रथमं क्षेत्रे गमनं प्रवपनं बीजवपनं कस्मिंश्चिद्देशे हेमन्तादौ पानीयेन क्षेत्रभूमिः प्लाव्यते तत्र ( प्लवन ) मपरं सीतायज्ञकरणं तत्र मोदकादिभिः सीतापूजनम् यदा खले धान्यमानयति तदा खलयज्ञः । उत्पूते धान्ये तत्र तन्तीयज्ञः । गृहागते धान्ये तत्र अनडुहय ( द्य ) ज्ञः । तत्रानडुहाभ्यांशृङ्गाभ्यां करणं मालामुकुटबन्धनं पवित्रादिकानामासादनम् । ओम् अग्नये स्वाहा । ओम् इन्द्राय स्वाहा इति द्वादश प्रधानाहुती र्जुहोति ततो जयहोमः । एवं सर्वेषु हलाभियोगेषु कुर्यात् । इति हलाभियोगानुक्रमः । स्वस्ति एतानि कर्माणि संवत्सरेषु च पर्वसु सर्वप्रायश्चित्तं तन्त्रेण कुर्यात् नद्युदधि-आयोजनं प्रथमसौरिकसंवदनम् । प्रथमं सीरिसं पर्यायनम् स्वे क्षेत्रे प्रथमं परिगमनं प्रवपनं बीजवपनं प्रथमं प्रप्लवनं प्रथमं धान्यानां लवनं प्रथमं प्लवनमिति केचित्पठन्ति । तत्र क्वचिद्देशान्तरे हेमन्तकाले पानीयेन क्षेत्रभूमिः प्लाव्यते । सीतायज्ञः कृषिवृत्तिजीवनैरेतेषु निमित्तेषु एता देवता अवश्यं यष्टव्या नित्याधिकारात् । सांवत्सरेषु च पर्वसु एता एव देवता यजति । संवत्सरस्येमानि सांवत्सराणि पर्वाणि पञ्चमासमन्वय (?) बहुवचनमृतसत्यमभिमनुतेति (?) सायं प्रातस्तथा दर्शपूर्णमासयोश्चेति स्यात् ॥ ७ ॥

नद्युदधि...यजति-वारुणं यवमयं स्थालीपाकं करोति । ओषधि...यजति । ओषधयो व्रीहियवादयः । वनस्पतय आम्रफलादयः । एतयोः समागमे विधिना सोमं यजति । अनादि...यजति । अग्निः सर्वा देवता इति श्रुतिवचनात् । नद्यु वरुणमाज्यमनादेशात् । हविषा सहाग्निः । यदा तीर्थयात्रां व्रजेदन्यार्थे वा प्रवसेत् स गङ्गादि नदीमासाद्य समुद्रं वा तडागं वा देवखातं वा तदा प्रधानस्थाने वरुणाय स्वोहति यजेत् । अन्यस्त्वाह यो नदीतीरे वसति तडागनद्योः समीपे स तयोः प्रथमपूरे वरुणं यजेत् । उदधिशब्देन कूप उच्च्यते । तस्य प्रथमसाधने वरुणं यजेदिति अत्यल्पमिदमुच्यते । उदधिः कूप इति वापीपु-

स्पतिषु सोममनादिष्टदेवतेष्वग्निम् ॥ ८ ॥ इति द्वितीये दशमः खण्डः ॥ १० ॥

---

ष्करिण्योरपि प्रथमसाधने स्यात् । ओषधिषु पक्कासु वा क्षेत्रे प्रथमसमागमे च वनस्पतिषु अश्वत्थादिषु तथा प्रधानस्थाने आज्येन सोमाय स्वाहेति यजेत् । अन्यस्तु नीवाराद्योषधिषु प्रथमभक्षणे शम्यादिवनस्पतिफलप्रथम भक्षणे सोमं यजतीति व्याख्यातवान् । अनादिष्टदेवतादेशो नास्ति यथा त्रीणि नाभ्यानि उपनयनादीनि च तेष्वग्निं यजति अग्निः सर्वा देवता इति श्रुतेः[1] ॥ ८ ॥

इति पूरणव्याख्याने द्वितीये दशमः खण्डः ॥ १० ॥



---

१ एतद्व्याख्यानं घ पुस्तके सूत्रानुक्रमेण ग च पुस्तकयोस्तु प्रथमसूत्रे एव व्याख्यानं न द्वितीयादिसूत्राणामिति यथोपलब्धं गृहीतम् तद्यथासंभवं वेदितव्यम् ॥

## एकादशः खण्डः



**अवसानꣳ समꣳ समूलम् ॥ १ ॥ दक्षिणाप्रवणमन्नकामस्य मारुकास्तत्र प्रजा भवन्ति ॥ २ ॥ सर्वतः समवस्रावम् ॥ ३ ॥ समवस्रुत्य वा यस्मात्प्रागुदीचीरापो निर्वहेयुस्तद्वा ॥ ४ ॥ गर्त्तं खात्वा यत्तैः पाꣳसुभिः प्रतिपूर्येत तद्वा ॥ ५ ॥ यदि धारयिष्णूदकतरꣳ स्यात् ॥ ६ ॥**

---

उक्तानि नित्यानि साधनानि शालाग्निसहितानि इदानीं महायज्ञा वक्तव्यास्ते च गृहे भवन्ति तेन गृहकरणं तावदाह '**अवसानं समं समूलम्**' अवस्यन्ति समाप्नुवन्ति श्रौतस्मार्तानि कर्माणि यस्मिंस्तदवसानम् । सममुच्चनीचप्रदेशरहितम् । समूलं दूर्वाद्योषधिसमन्वितं पर्यवस्येदिति शेषः । ननु च शालाग्निकरणात्प्रागेतद्वक्तव्यम् । यस्य पैतृकं गृहं नास्ति तदर्थमिहोच्यते पितृगृहमो(मौ)चित्यादनूदितमेव । ज्वलयन्तोऽग्निं जागरयेयुरित्यत्र उद्वाहे च संततामुलपराजिमित्यत्र वर्णितम् । दक्षिणेनोन्मत्त भावितमवेदं कोनामाताद्यामवेत्यै क्रीणीते तथा च वार्त्तारो भवन्ति । अहो मां किं माता या स्तनेना बद्धायै मारयति । एवं तर्हि दक्षिणप्रवणं वर्जयेदित्येवमर्थमयमुपदेशः ॥ १ ॥ २ ॥

सर्वतः सर्वासु दिक्षु यत्रोदकं परिषिक्तं भवति तदित्यर्थः । समसृत्य यस्मात्प्राची(दि)गुदीची(च्यो)रापो निर्वहेयुस्तद्वा उदकं यत्र परिषिक्तं सत् सर्वादिशो गत्वा ततः प्राग्वोदग्वा निसरति तत्रावसानं कुर्यात् तत्रैव गर्त्तं खात्वा यत्तैः पांशुभिर्गर्भोद्भवैरिति गम्यते प्रतिशब्दात् । यदि प्रपूर्यते तस्य त्यागोर्वाद्यद्वा धारयिष्णुरुदकतरं स्यात् । यद्वा उदकं परिषिक्तं सस्वरं धारयति तदवसानं कार्यम् । उदकतरमतिशयेनोदकयुक्तं विन्मतोर्लुगिति उदकशब्दान्मतुलोपः । अर्थात्त्याज्यं यत्रोदकं क्षिप्रं शोषयति । " तत्र धारयिष्णूत्तरं स्यात् यत्रोदकं स्थित्वा तत्रैव शाम्यति तत्रापि गृहं कुर्यात् " ॥३॥४॥५॥६॥

---

१–२ ० घ. । ३–४ ० घ. । ५–६ ० अधिकं, घ.. ।

इदमहँ॰ विशमन्नाद्याय तेजसे ब्रह्मवर्चसाय परिगृह्णामीति वेश्म परिगृह्य गर्त्ते हिरण्यं निधायाच्युताय ध्रुवाय भौमाय स्वाहेति जुहोति ॥ ७ ॥ समीचीनामासीति पर्यायैरुपतिष्ठते प्रतिदिशं द्वाभ्यां मध्ये ॥ ८ ॥ उदकाँ॰स्येऽश्मानँ॰ व्रीहीन्यवा-न्वास्य परिषिञ्चति स्योनापृथिवि भवेति द्वाभ्याँ॰ सुत्रामाण-मिति द्वाभ्याम् ॥ ९ ॥ शमीशाखया च पलाशयोदश्वं त्रिः समुन्मार्ष्टि स्योना प्रथिवि भवेति द्वाभ्याँ॰ सुत्रामाणमिति द्वाभ्यां नमो अस्तु सर्पेभ्य इति तिसृभिश्च ॥ १० ॥

इदं तत् सर्वतो भद्रमयमूर्जो ऽयँ॰ रसः ।
प्राप्यैवं मानुषान्कामान्यदशीर्ष्णी तल्लप्स्यसि ॥

इति मध्यमाँ॰ स्थूणामासिच्य गर्त आसिञ्चति ॥ ११ ॥

---

इदमहम्—अनेन मन्त्रेण वेश्मदेशपरिग्रहः । गर्त्ते हिरण्यमाज्यं संस्कृत्य[1] गर्त्ते हिरण्यादि होमः । पूर्वमिदमहमिति मन्त्रेण गृहं सूत्रयति । मध्यमायाः । स्थूणायाः । गर्त्तं खात्वा गर्त्ते हिरण्यं निधाय आज्यसंस्करणम् । अच्युता-येत्याज्यं जुहोति ॥ ७ ॥

समीचीनामासीति चतुर्भिः पर्यायैः प्रतिदिगुपस्थानं निगदसिद्धम्[2] । ततो द्वाभ्यां पर्यायाभ्यां मध्ये उपस्थानं कुरुते ॥ ८ ॥

उदकांस्ये व्रीहियवानित्यादि सिद्धमाग्रहायणीवत् ॥ "[3]उदकांस्ये कांस्यपात्रे उदकं गृहीत्वा अश्मानं व्रीहियवान्वा मुक्त्वा अस्य गृहस्य ? परिषिञ्चति परि स-र्वतः सिञ्चति स्योना इति द्वाभ्यामेकः परिषेकः । सुत्रा ···· इति द्वितीयः परि षेकः । इति परिषेकमन्त्राः । अथ स्यमी ···· स्योना ··· इति द्वाभ्यां सकृत्संमार्जनम् । सुत्रा इति द्वाभ्यां तथैव । नमो ···· इति तिसृभिस्तृतीयमुन्मार्जनम्[4] " ॥९॥१०॥

इदं तत्सर्वतो भद्रं मध्यस्थाना गर्त्ता आसेचन—मन्त्रः । इहैव तिष्ठ

---

१ सत्कृत्य, ग. च. । २ कुरुते, घ. । ३–४ ० अधिकं, घ. । ९–० घ. ।

इहैव तिष्ठ नितरा तिल्वला स्थिरावती ।
मध्ये पोषस्य पुष्पतामा त्वा प्रापन्नघायवः[1] ॥
आ त्वा कुमारस्तरुण आ त्वा परिसृतः कुम्भः ।
आ वत्सो[2] जगता सह आ दध्नः कलशमैरयम् ॥

इति मध्यमाꣳ स्थूणामभि मन्त्रयते ॥ १२ ॥

वसूनां त्वा वसुवीर्यस्याहोरात्रयोश्चेति गर्त्ते स्थूणामवदधाति ॥१३॥

ऋतेऽवस्थूणा अधिरोह वꣳशो अग्ने विराजमुपसेधशक्रम् ॥

इति मध्यमꣳवꣳशमवदधाति ॥ १४ ॥ तूष्णीꣳशिष्टाः स्थूणा वꣳशाश्च ॥ १५ ॥ प्राग्द्वारं दक्षिणाद्वारꣳ वा मापयित्वा गृहानहꣳ सुमनसः प्रपद्ये वीरꣳ हीत्येतया [3]प्रपद्यते यथा पुरस्ताद्व्याख्यातम् ॥ १६ ॥

प्रैतु राजा वरुणो रेवतीभिरस्मिन्स्थाने तिष्ठतु पुष्यमाणः ।
इराꣳ वहन्ती घृतमुक्षमाणास्तेष्वहꣳ सुमनाः सꣳवसाम ॥

---

नितरां स्थूणाभिमन्त्रणे द्वे ऋचौ ऋतूनोप्या अनेन मन्त्रेण गर्त्ते स्थूणा निधीयते ऋते वस्थूणामध्यमं वंशस्य स्थूणायामवधानमन्त्रोयम् ॥११॥१२॥

तूष्णीं शिष्टाः स्थूणा वंशाश्च आदध्याल्लोकवत् ॥ १३ ॥ १४ ॥ १५ ॥

प्राग्द्वारं दक्षिणाद्वारं च प्रत्यग्द्वारमुत्तरमनाम्नानान्न भवतः । प्रदर्शनार्थं वा वा-शब्दः । पुरस्तादुद्वाहे यथा वर्णितं मङ्गलानि प्रादुर्भवन्ति । उलपराज्या येष्वध्येति प्रवसं गृहानहमित्येतया रोहिण्या मूलेन वा यद्वा पुण्योक्तमन्याहिताग्निमित्यादिकम् ॥ १६ ॥

'प्रैतु राजा वरुणो'-प्रतिपादनमहान्तमुदकुम्भमुत्तरपूर्वस्यां दिशि अनेन मन्त्रेणेति अरिष्टास्मा उदश्वनमुदकोद्धरणभाण्डं परिप्लवमवस्थापयत्यनेन

---

१ इव, ग. च. । २ त्सौ, ग, च. । ३ द्येते, ग. । ४-५ ० घ. । ६-७ ० घ. । ८-९ ० घ.

इत्युत्तरपूर्वस्यां दिशि प्रैतिपानैमुदकुम्भमवस्थापयति ॥ १७ ॥

समुद्रꣳ वः प्रहिणोमि स्वाꣳ योनिमभिगच्छत

अरिष्टा अस्माकꣳ वीरा मा परासेचि मत्पयः ।

इत्युदश्चनम् ॥१८॥ वास्तोष्पत्यं पयसि स्थालीपाकꣳ श्रपयित्वा तस्य जुहोति । अमीवहा वास्तोष्पते वास्तोष्पत इत्येताभ्याम्—

वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो

अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥

वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रणवया गातुमत्या

पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥

इति ॥ १९ ॥ जयप्रभृति समानम् ॥ २० ॥ इति द्वितीय एकादशः खण्डः ॥ ११ ॥

---

मन्त्रेणेति । प्रातिपानमुदपानार्थमुदकुम्भमवस्थापयति । समुद्रम् इत्युदश्चनम् । एवं परिपूर्णं गृहं सुशोभितं कृत्वा वास्तोष्पत्यम् ॥ १७ ॥ १८ ॥

वातोष्पत्यं पयसि प्रधानस्थाने अमी वहा वास्तोष्पते वास्तोष्पते प्रतिजानीहेति द्वौ वास्तोष्पते वास्तोष्पते प्रतरणो वास्तोष्पते शग्मयेति प्रघट्टोक्ते द्वे ऋचौ स्थालीपाकस्य एताश्चतस्रो जुहोति पूर्णपात्रं दक्षिणान्तसिद्धम् । वास्तोस्पत्यं तस्य जुहोति तत्र पवित्रादिकानामासादनम् । एवं चतुर्थस्थालीपाकस्य जुहोति ततो जयहोमः । अस्य वास्तोष्पतेर्यजमानकर्मणः समृध्यर्थम् ॥ १९ ॥ २० ॥

इति पूरणव्याख्याने द्वितीये एकादशः खण्डः ॥ ११ ॥



---

१ प्रा, घ. । २ दन, ग. च. । ३ सुजाते, ग. च. । ४–५ ० घ. । ६–७ ० घ. । ८–९ ० ग. च. ।

# द्वादशः खण्डः

## वैश्वदेवस्य सिद्धस्य सायं प्रातर्बलिं हरेत् ॥ १ ॥

गृहप्रकरणमभिधाय तत्र स्थानविशेषेषु बलिहरणं वैश्वदेवाख्यमाह 'वैश्वदेवस्य' विश्वेषां देवानामिदं विश्वे देवा देवता अस्येति वैश्वदेवमन्नं सिद्धस्येति सामानाधिकरण्यात् सर्वार्थपचनं वैश्वदेवशब्देनोच्यते। "वैश्वदेवे तु निर्वृत्ते" (भ. ३. १०८) इत्यादि प्रयोगदर्शनात् । तदर्थं पचनं वैश्वदेवमिहोच्चरितं सिद्धशब्दस्येति विशेषणात् सिद्धस्येति स्थालीपाके अपणधर्मव्यवच्छेदार्थमतो व्रीहियवापचारे नैव ततः सामान्यं नियमतः प्रतिनिधेयं तस्मादिङ्गुदैर्बदरैर्वापि महायज्ञा निर्वर्त्या इति सिद्धशब्दोपादानत उक्तम्। अहरहर्जुहुयादाकाष्ठादहनारहर्दद्यादुदपात्रादित्यादि सर्वसिद्धशब्दो नित्यपर्यायः इति गृह्यते तत्र षष्ठीनिर्देशान्वयात्सायंप्रातर्ग्रहणेन नित्यत्वप्रतिपादनाच्च तत्र महामतिष्को(ःको)ऽप्याह स अपयति ग्रहणे कर्त्तव्ये यत्सिद्धशब्दोपादानं तल्लौकिके सिद्धस्येति प्रमाणान्तरगम्यज्ञापनार्थं तैत्तिरीयके च दर्शनादिति तदसत् सिद्धस्येति निष्पन्नवस्तुतामात्रं पाकस्य बोधयति न पुनरमुष्मिन्नग्निविशेषे सिद्धस्येति प्रमाणान्तरगम्यो ह्यग्निविशेषः। ननू(तू)क्तं तैत्तिरीयके। दर्शितं यदि तैत्तिरीयके लौकिके पचनं तत्रैव तत् । मैत्रायणीयके किं तेनापि कठवाजसनेयादिमनुहारीताद्युक्ते कः प्रद्वेषः। तैत्तिरीयकवार्त्तायामाह तैत्तिरादश्रुतां न हि तैत्तिरीयके विद्यमानोपासनीयस्य शालाग्नौ पचनमस्ति किं तत्रैवानुप्रवेशितशालाग्निः । आहिताग्निस्तद्विषयं तद्व्याख्यानमापस्तम्बधर्मशास्त्रवचनमन्यैर्व्याख्यातृभिस्तदपि निगृहीतं स्ते(ते)हि शालाग्न्यर्थं धारयन्ति। अर्द्धेन पचन्तीति। आतश्चैव सदा न भयेन (?) अदधीमहि येनासौ सिद्धस्येति कर्त्तरि षष्ठीत्यवोचन्नाकर्त्तृका क्रियास्तीत्यवदत्। अपर आह लौकिकेऽग्नौ सिद्धस्येति नास्याग्निगृहाद्धरेयुर्नान्यत आहरेयुरितिवचनात्। निर्ह[र]णाच्च न चैतत्ततोऽप्यनुतिष्ठति किं तर्हि असकृतदिवसस्यानुगतमग्निमस्य गृहाद्धरन्ति। अन्यतश्चौ[3]-

---

१ हर्नोरहर्द, ग. च. । २–३ ० घ. ।

हरन्ति । एतच्चाप्यन्यथोक्तवन्तस्तत्पुरस्ताद्दर्शितम् । यदि च लौकिकाग्नौ पचनं स्यादेकादशाहोत्कर्षो नोपपद्येत । अथ पिण्डपितृयज्ञ एकेन पिण्डेन एकादशेऽहनि शालाग्न्यभावान्न प्राप्नोति तस्मादुत्कृष्यतीति औद्वाहिकोग्निरपिनावश्यं धार्यत इति यद्यवश्यमसौ धार्यः स्यात्तत्रैव श्राद्धं स्यात्तत्कथमग्निभावादुत्कर्षो भवेदपि चैकादशेह्नि औद्वाहिकेऽग्नौ यमदैवत्यां शान्तिमुक्तवान् । यस्तस्यैकादशेहन्यग्न्यभावः कथं तदलं महामाति(ते) कथय योप्यौद्वाहिकेऽष्टकावैश्वदेवादीनि न करोति सोऽपि तच्चाह सर्वथा प्रसिद्धं केन हेतुनोत्कृष्य उत्तरेहनि नीतिमिति असूत्रान्तर्हितं वा सूत्रं कुत एकादशेहनि नित्यत्वाद् गृहपतित्वे संजातेऽपि न गृहमेधित्वं क्रियते अग्न्यभावात्पितृयज्ञाधीनत्वात्पाचिके शालाग्निविधानमध्ये उत्पाद्य पाकार्थं शालाग्निकरणादिति विधिविदां निश्चयः । उत्तरकालं भार्यया सहाधिकारात् शालाग्निविधानादनौचित्यात्प्रेतपितृकस्योद्वाहिकाभावाद् द्वादशेहनि श्राद्धचोदना पाकार्थं शालाग्निकरणमिति विधिविदां निश्चयः । तथा चाहुः—

‘ यथा पाणिगृहीतायां प्रजा सन्तानवर्द्धनी ।
एवं परिगृहीतेऽग्नौ पाकः पुष्टिकरो भवेत् ॥ ’

इत्याहिताग्नेः सव्यापसव्यो नित्यो हुतशेषं वैश्वदेवमेव स्मृतिवचनात्पाकयज्ञ इति आमिक्षाख्येन हविषा लक्ष्यते । प्रजननं वापतत्[१] हविर्यद्वैश्वदेवमिति । एवं बलिं हरेदिति होमसमुदायो बलिहरणशब्देन प्रयोगबोधना[२]द्वाक्ये लक्ष्यते । अग्नये सोमायेत्यादीनि चतुर्थ्यन्तानि पदानि देवागारे उदकुम्भसकाश इत्यादीनि सप्तम्यन्तत्वात्स्थानविशेषवाचकानि पदानि पुरस्तादित्यादेरव्ययत्वात्सप्तमीलोपः । गृहगृह्याभ्यो देवताभ्य इति वाक्यम् । देवागारे कुलदे ‥उदकुम्भप्रतिपादनं धन्वन्तरितर्पणे देवागार इव धन्वन्तरितर्पणमुक्तम् । उभयलिङ्गबलिशब्दमनुमीयते । उत्तरामुत्तरामिति दीर्घाकारः प्रयोगाभिरस्ति च स्त्रीलिङ्गो न च विशेषणं दिवा प्रातः । नक्तं सायमुपक्रमवशात् वैश्वदेवहोममन्त्रसंस्कारं केचिदिच्छन्ति । हुतं दद्यान्नाहुतमश्नीया[३]दिति वचनात् । अत्यल्पमिदमुच्यते नाहुतमिति सर्व एव महायज्ञा अन्नसं[४]

१–२ ० घ. । ३–४ ० घ. ।

**अग्नीषोमौ धन्वन्तरिं विश्वान्देवान्प्रजापतिमग्निं स्विष्टकृतमित्येवं होमो विधीयते ॥ २ ॥ अथ बलिं हरत्यग्नये नमः सोमाय धन्वन्तरये विश्वेभ्यो देवेभ्यः प्रजापतये अग्नये स्विष्ट-**

स्कारान्न तदश्नीयाद्यस्य चाग्रन्नदीयते भुञ्जीतपितृसेवितमित्यादिवचनात्तदसदिति । अन्ये तु संस्कारत्वे प्रति पाकमावृत्तिः स्यात् सायं प्रातश्च नियमो नोपपद्यते प्रतिषेधानुपपत्तेश्च न बलिहरेदिति । न च यदर्थः पाकः सोढा साधनस्य पाकस्य गुणतोऽपि भवति प्रत्युक्ता(ता)वशिष्टस्याश्नीयादिति वचनादुपयुक्तसंस्कारत्वं स्वयं भोजनस्य गम्यते । नाहुतमश्नीयादिति तु होमादीनामवश्यकर्त्तव्यताख्यापनपरम् । "अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्ते" (म. ३-११८) इतिवत् तस्मात्पुरुषसंस्कारार्थतैवेतिसिद्धम् ॥ "वैश्वदेवनिमित्तमभ्युदयश्राद्धम् । पाकं श्रपयेद्बलिनिमित्तं श्राद्धमाभ्युदयिकं वैश्वदेवं कुर्वीत । ततो यजमानत्यागः कर्त्तव्यः । यदा यजमानः प्रवासं करोति तदा पत्नीत्यागः कर्त्तव्यः । अत्रिः—

**साग्निकः पितृयज्ञान्ते बलिकर्म समाचरेत्**
**अनग्नि (र्) हुतशेषेण बलिं काकबलिं हरेत् ॥ "**

देवयज्ञं तावदाह अग्नीषोमा इत्येवं होमो विधीयते । इति शब्दः प्रकारार्थे अतःप्राक्स्विष्टकृत एवंप्रकारदेवताः प्रगृह्यन्ते वाक्ताधिकोपसंहरेस्याभ्युदयादुत्पत्यनर्थको (?) वेत्येवं शब्दो न च द्वितीयान्तत्वाद्यदितरेषां शब्दा अन्तरप्रयोजनं कुर्यात् । नाप्यग्नीषोमौ देवता उच्यन्ते होमो विधीयत इति स्वाहाकारयोगं दर्शयति । अतश्चतुर्थी प्रयोक्तव्या । अग्नीषोमाविति निर्देशार्थं न देवतार्थं बलिहरणसाहचर्यप्रत्यभिज्ञापनाय यथाग्नीषोमौ चक्षुषौ (षी) वा अतः-अग्नीषोमा इति प्रायणीये स्रुवेण होममग्निहोमत्वात् । हस्तेन वा बलिं हरेदिति चोदनासाम्यात् ॥ अग्नये स्वाहेति षडाहुतीर्जुहुयात् ॥ २ ॥

इदानीं भूतयज्ञानधिकरोति असौ बलिं हरतीति पाठक्रमेणानन्तर्यस्योक्तत्वादथशब्दोऽधिकारार्थ एव युक्तः । यद्वा बलिं हरेदिति लाक्षणिकत्वात्सचोक्तबलिहरणमथशब्दस्या (?) बलिहरणमाह अथ बलिं हरतीति यथा हविष

१ नन्तराप्र, ग. च. । २-३ ० घ. । ४-५ एतद् घे. एवाधिकम् । ६-७ ०-घ. । ८-९ ० घ. । १०-११ ० ग. च. । १२-१३ ० घ. ।

कृत इत्यग्न्यागार उत्तरामुत्तराम् ॥ ३ ॥ अद्भ्य इत्युदकुम्भसकाशे ॥ ४ ॥ ओषधिभ्य इत्योषधिभ्यो वनस्पतिभ्य इति गृहमध्यमायां स्थूणायाम् ॥ ५ ॥ गृह्याभ्यो देवताभ्य इति गृहमध्ये ॥ ६ ॥ धर्मायाधर्मायेति द्वारे ॥ ७ ॥ मृत्यव आकाशायेत्याकाशे ॥ ८ ॥ अन्तर्गोष्ठायेत्यन्तर्गोष्ठे ॥ ९ ॥ बहिर्वैश्रवणायेति बहिः प्राचीम् ॥ १० ॥ विश्वेभ्यो देवेभ्य इति वेश्मनि ॥ ११ ॥ इन्द्रायेन्द्रपुरुषेभ्य इति पुरस्तात् ॥ १२ ॥ यमाय यमपुरुषेभ्य इति दक्षिणतः ॥ १३ ॥ वरुणाय वरुणपुरुषेभ्य इति पश्चात् ॥ १४ ॥ सोमाय सोमपुरुषेभ्य इत्युत्तरतः ॥ १५ ॥ ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥ १६ ॥ प्राचीमापातिकेभ्यः सम्पातिकेभ्य ऋक्षेभ्यो यक्षेभ्यः पिपीलिकाभ्यः पिशाचेभ्योऽप्सरोभ्यो गन्धर्वेभ्यो गुह्यकेभ्यः शैलेभ्यः पन्नगेभ्यः ॥ १७ ॥ दिवाचारिभ्यो भूतेभ्य इति दिवा नक्तं चारिभ्यो भूतेभ्य इति नक्तम् ॥ १८ ॥ धन्वन्तरये धन्वन्तरितर्पणम् ॥ १९ ॥

---

एकेषां सायं प्रातः पूर्वान्हः प्रातः स्यात् । मुख्यवृत्त्या[1] सायंप्रातःसंध्या प्रातर्दिवा लक्ष्यते सायं नक्तमिति[2] बलिं देवतायै निवेद्येत्तन्नहरेन्निवेदयेत्[3] । सायं प्रातः कालयोर्वैश्वदेवस्य पाकस्य सर्वार्थस्य सिद्धस्योपपन्नस्य बलिं सहचरितात्पञ्चयज्ञान् हरेत् । कुर्यादितिवाक्यार्थ (:) । महायज्ञा (:) प्रचोदनैषा । अतस्तेषां यज्ञानामेके केऽपि प्राक्प्रयुक्ते ततश्च महायज्ञेषु निवृ(वृ)त्तेषु यतिष्पतरा(यदीतरा)र्थे वा पचेत तदा नैव बलिहरणं होमश्च स्यातामिति[5] सायं प्रातरेव बलिं हरेत् । उ[6]त्तरामुत्तरामितिदीर्घाकारौः ॥ ३ ॥

गृहगृह्याभ्यो देवताभ्य इति वाक्यं देवागारे कुलदेव उदकुम्भप्रतिपादनं धन्वन्तरितर्पणे देवागार इव धन्वन्तरि तर्पणमुक्तं ततो निर्दिष्टविभागबलिं हरेत् ।

---

१ ख्या, घ. । २-३ ० घ. । ४-५ ० घ. । ६-७ ० ग. च. ।

**अद्भिः सꣳसृज्य पितृभ्यः स्वधेति शेषं दक्षिणा भूमौ निनयेत् ॥ २० ॥ पाणी प्रक्षाल्याचम्यातिथिं भोजयित्वाऽवशिष्टस्याश्नीयात् ॥ २१ ॥ इति द्वितीयपुरुषे द्वादशःखण्डः । १२ ।**

---

अग्न्यगार उत्तरामुत्तरामिति दीर्घाकाराः। ॐ अग्नये नमः। ॐ सोमाय नमः। अथ उदकुम्भसकाशे ॐ अद्भ्यो नमः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

पितृयज्ञमधुनाह—अद्भिः संसृज्य शेषशब्दात्प्रभूतमन्नं बलिहरणार्थमुद्धृत्य यथा स्वधाकारार्थं शिष्येत्। पितृभ्य इति विरूपैकशेषात् पितामहप्रपितामहयोरेभ्रातस्तावदहरहः स्वधां करोति ॥ "अद्भिः संसृज्य अपसव्येन पितृभ्यः स्वधा १ शेषं दक्षिणा भूमौ निनयेत्" ॥ २० ॥

'पाणी प्रक्षाल्य' कथमेतत् पाणी प्रक्षाल्यातिथीन् भोजयित्वेति नायं क्रमः कैमुद्यतिथीन् भोजयित्वा पाणी प्रक्षाल्यावशिष्टस्याश्नीयादिति क्रमः। तस्माद्ब्राह्मण आहार्य आहृते हस्ता अवनेनिजीतेति श्रुतिः। वामादेव्यादीयातिक्षेप ? नित्यत्वादग्रब्राह्मणाय दत्वा भिक्षां च भिक्षवे अवशिष्टग्रहणादुद्धृत्या ? श्व भोजयित्वेति षष्ठीनिर्देशात्पत्नी अवशेषयेत्। अवशिष्टस्यैवाश्नीयादिति नियमार्थः। ततश्च सर्वोपयोगेनात्मार्थं पुनः पचेत्। स्वजनगृहादौ च न भुञ्जीत तदितरलोकयात्रापराङ्मुखस्य स्वल्पपरिच्छदस्य चि[त्त]वृत्तेर्युज्यते। महापरिग्रहस्य तु यात्रापराङ्मुखतया स्वजनगृहादावभुञ्जानस्य द्वि ? जनादिविद्वेषादकीर्त्या युज्यते योगक्षेमात् क्रमिकः (?) स्याज्ज्योतिष्टोमाश्वासहायस्य न सिध्येयुस्तस्माल्लोक उत्तमजिह्मनुरुध्यमाताया वध्वावजान (वशिष्टाशन) विष्वप्रयुक्त्यास्वजनगृहादौ भुञ्जानेव नियमैरङ्गीकृता स्यादवशिष्टाशननियोगस्योत्सर्गत्वात्। यद्वावशिष्याश्नीयादिति नेदं पश्चाद् भोजनपरं किं तर्हि देवतातिथिपितृभ्यो गृही पचेदित्येवं परमिति ततश्च प्रवासादि [षु] आत्मार्थं पचनमसहाग्निप्रवासे ॥ २१ ॥

इति द्वितीये द्वादशः खण्डः ॥ १२ ॥



---

१ दक्षिण, ग, च.। २-३ ० घ.। ४-५ इदमधिकम् घे.। ६ कि, घ.। ७-८ ० घ.। ९-१० ० घ.।

# त्रयोदशः खण्डः

अथातः षष्ठीकल्पꣳ व्याख्यास्यामः ॥१॥ शुक्लपक्षस्य पञ्चम्यां प्रत्यङ्मुखो हविष्यमन्नमश्नीत[1] ॥२॥ अधः शयीत दर्भेषु शालिपलालेषु वा प्राक्शिरा ब्रह्मचारी ॥३॥ श्वोभूत उदित आदित्ये स्नानं पानं[2] भोजनमनुलेपनꣳ स्रजो वासाꣳसि न प्रत्याचक्षीत ॥४॥ यावद्द्यात्तावदश्नीयाद्यद्यद्द्यात्तत्तदश्नीयादन्यत्रामेध्य–पा-

'अथातः षष्ठीकल्पं व्याख्यास्यामः'। अथ शब्दोऽधिकारार्थः षष्ठीकल्पाख्यं कर्माधिकृतम्। अतः शब्दो हेत्वर्थः। अत इदं कर्म वक्ष्यमाणफलशतसहस्रस्य संयोज(य)न्नेकपरस्य[3] वा अतो व्याख्यास्यामः। षष्ठ्यां यत्क्रियते तदपि षष्ठीत्युच्यते। कर्माष्टकानां तस्य कल्पे विधानं व्याख्यास्यामः। वक्ष्याम इति तत्संप्रयोजनत्वात्सामान्योपदेशः। इदानीं विशेषानुपदिशति शुक्लपक्षे निगदसिद्धम् ॥ १ ॥ २ ॥

अधस्ताद्दर्भान् हन्ति तेऽप्यधः[4] शयित्वमस्तीति गम्यते शालिपलालेषु वा। अधः शयीतेति संबध्यते प्राक्शिरा ब्रह्मचारी मैथुनवर्जीत्यर्थः। श्वो[5] भूते उदिते आदित्ये[6] श्वो भूते द्वितीयेऽह्नीत्यर्थः। उदित आदित्ये प्रागुदयादपि श्वो भूतः कालोऽस्तीत्युदित आदित्यग्रहणम्। स्नानं पानं[7] भोजनमनुलेपनं स्रजो वासांसि न प्रत्याचक्षीत स्नाहि याहीत्युक्तं न प्रत्याख्यायीत-(यात्)[8] "श्वो[9] भूते प्रातःकाले न प्रत्याचक्षीत न निराकुर्यात्। पानमुदपानं पयःपानं वा तस्मिन्षष्ठीदिने यः कोऽपि ददाति न निराकुर्यात्[10]" ॥ ३ ॥ ४ ॥

ननु भोजनं यदि न प्रत्याचक्षीत तदानीं बहुशो भोजनं यदि स्यादभोज्यं च तदा कथमित्याह–यावदश्यं तावदश्नीयात्। तदेव दशकृत्वाद(?)-नुपदेश्यं पाठान्तरं वा यावद्द्यात्तावदश्नीयाद्यावत्सार्द्धं भुक्तं न दुष्यति तावदश्नीयात्। यद्यद्द्यात्तत्तदश्नीयादन्यत्रामेध्यपातकिभ्यः। अमेध्यमयज्ञियम्।

१ हविष्यान्न, ग. च. । २ यानं गानं पानं, ग. च. । ३ योगस्यैकव, घ. ।
४ हन्ति तेऽपि ० घ. । ५–६ ० घ. । ७–८ ० घ. । ९–१० एतत्स्थमधिकं, घ. ।

